महर्षिपाणिनिप्रणीतः

# अष्टाध्यायीसूत्रपाठः

## प्रकरणनिर्देशसमन्वितः

पुष्पा दीक्षित

## ग्रन्थमिमधिकृत्य किञ्चित्

नभस्यादित्यं परितो ग्रहा इव बम्भ्रमीति निखिलो वैदिको लौकिकश्च शब्दराशिः पाणिन्यष्टाध्यायीं परितः। भगवता पाणिनिना महति समाधियोग आस्थायास्य निखिल-शब्दराशेः प्रत्यक्षमेककालावच्छेदेन कृतमत एव तत्र न किमपि रिष्यति। अत्राष्टस्वध्यायेषु विभक्तानि सूत्राणि शब्दस्यान्तः प्रविश्य, प्रकृतिं प्रत्ययं च विभज्य, तत्रत्यं सर्वं प्रकाशयन्ति। एतत् सर्वमद्भुतमिव यद् भगवता पाणिनिना शब्दानां सिद्ध्यर्थं शब्दा नोक्ता अपितु तत्रत्यान् लोपागमवर्णविकारान् मनस्याकलय्यैकैकस्य कार्यस्य कृते सूत्राणि प्रोक्तानि। तानि च सूत्राण्यधिकारेषु प्रकरणेषु च निबद्धानि सन्ति। एकैकस्मिन् प्रकरण एकैकं कार्यं निःशेषीक्रियते, येन तद्विषयिविचिकित्साव्यपोहो जायते। सन्ति चैतानि प्रकरणान्यष्टाध्याय्यां तिलतण्डुलवद् विभक्तानि, येषां विज्ञानेन शब्दसाक्षात्कारो भवति। महता देवेन सायुज्यमप्यनेनैवाधिगम्यते। अधिकाराणां, प्रकरणानां च विज्ञानं विहायाष्टा-ध्यायीसूत्रपाठोऽपि निगदेनैव शब्द्यमानः कामान् दोग्धुं नालं भवति, का कथा पुनरष्टाध्यायीं विना प्रक्रियाग्रन्थेषु कृतस्यान्धयत्नस्य।

सर्वेषां शास्त्राणां मुखं व्याकरणम्। तस्माच्च बिभेति लोकः प्रक्रियाकाठिन्यात्। अतो मयाष्टाध्याय्याः स्वतः प्रकाशितः पन्थाः प्रकरणानां विभाजनं प्रदर्श्य सर्वदृग्गोचरीकृतः। पाणिनेरिदं महत्सुविहितं सामान्यविशेष-वल्लक्षणमाश्रित्य विश्वस्य कापि भाषा व्याकर्तुं शक्यते अतः सर्ववेदपारिषदं हीदं शास्त्रम्। अष्टाध्याय्याः सर्वविषयप्रकाशनायाथ च पाणिनेः प्रक्रियाविज्ञानावगमाय प्रकरणनिर्देशसमन्वितो-ऽयमष्टाध्यायीसूत्रपाठो ज्ञानप्रदीपो भविष्यति शब्दान् व्याचिकीर्षूणाम्।

23 cm. pp. 192 2009 रु० 400

महर्षिपाणिनिप्रणीतः

# अष्टाध्यायीसूत्रपाठः

## प्रकरणनिर्देशसमन्वितः

पुष्पा दीक्षित

ज्ञानभारती पब्लिकेशन्स

दिल्ली भारत

प्रथम संस्करण : 2009



ISBN : 978-81-907828-1-4

मूल्य : 150.00

ज्ञानभारती पब्लिकेशन्स
(प्राच्यविद्या-प्रकाशक एवं पुस्तक-विक्रेता)
25/73, शक्तिनगर, दिल्ली-110007
दूरभाष : 23848485, 09350884227

लेज़र टाइप सैटिंग :
एस० के० ग्राफिक्स, दिल्ली-84

मुद्रक : बालाजी ऑफसेट, दिल्ली

# AṢṬĀDHYĀYĪ SŪTRAPĀṬHAḤ

## of Maharṣi Pāṇini

## with Prakaraṇanirdeśa

*By*

**Pushpa Dikshit**

**GYANBHARATI PUBLICATION**

**DELHI** **INDIA**

# समर्पणम्

## आचार्य-डॉ०राधावल्लभत्रिपाठी



विविधविद्याविद्योतितान्तःकरणेभ्यः साहित्याकाशे प्रसृतयशोवितानेभ्यः
शास्त्रविचक्षणैरनारतं परिगृहीतेभ्यो नाट्यशास्त्रतत्त्वज्ञेभ्यो
राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिपदमलङ्कुर्वाणेभ्यो
ऽनुजकल्पेभ्य आचार्य-डॉ०राधावल्लभत्रिपाठिभ्यः
कृतिमिमां सादरं समर्पयति

दीक्षितपुष्पा

# शुभाशंसा

पाणिनीयव्याकरणमष्टाध्यायीनाम्ना प्रथितं जगतीतले। यन्त्रेण यथा बहूनि वस्तूनि निर्मातुं शक्यन्ते, तथैवाष्टाध्यायीसूत्रसाहाय्येन सर्वे लौकिका, वैदिकाश्च संस्कृतशब्दा यान्त्रिकरीत्या व्युत्पादयितुं शक्यन्ते। पाणिनिकाले संस्कृतभाषा लोकभाषासीत्। पतञ्जलिसमये शिष्टभाषात्वेन व्यवहृतेयं भाषा। तस्याः समग्रपरिज्ञानायाबाल्यादेवाष्टाध्यायीपाठो भवेत्। तदनन्तरं छात्राः सवार्तिकं महाभाष्यमधीत्य कौशलमधिगच्छेयुः। यतः सूत्रेष्वेव सूत्रार्थो निहितः। स च छात्रैः सूत्रैरेव बोधनीयः। अष्टाध्यायीपाठाभावादेवानुवृत्तिविषये सर्वथाऽनभिज्ञाः एव प्रायेण दरीदृश्यन्ते।

शब्दसाधनावस्थायां प्रयुज्यमाना गुण-वृद्धि-ह्रस्व-दीर्घ-लोप-षत्व-णत्व-ङित्व-कित्व-इट्-परस्मैपद-आत्मनेपद-कारक-विभक्ति-समास-संहिता-नुमागम-नलोपेत्यादयो विधयोऽष्टाध्याय्यां प्रकरणेषु समवेतरूपेण सुसज्जिता वर्तन्ते, किन्त्वधुनोपलभ्यमानेष्वष्टा--ध्यायीपाठेष्वेतेषां प्रकरणानां निर्देशो न वर्तते। केवलं मूलमात्रं समुपलभ्यते। अतः पाठवेलायामेषां झटिति परिज्ञानं न जायते। एतदर्थं डॉ. पुष्पादीक्षितमहोदयाभिरेकोऽभिनवः प्रयासो विहितः। सर्वथैकां नूतनां परिकल्पनां मनसि निधायाष्टाध्याय्याः प्रकरणनिर्देश-समन्वितः पाठः सम्पादितः। येन पाठेन सहैव प्रकरणानामपि ज्ञानं भवेद्।

अत्र सूत्रपाठस्यादौ सूत्राणां विभागोऽपि महता कौशलेन कृतः। संज्ञा-परिभाषा-ऽतिदेशाधिकाराः पृथक्कृत्य प्रदर्शिताः। अवशिष्टविषयस्य निर्देशः प्रकरणनिर्देशपूर्वकं कृतः। अनुक्रमणी च द्विविधा व्यवस्थिता - विषयानुक्रमेणाथ चाष्टाध्यायीप्रकरणानुक्रमेण। एतादृशं कार्यमद्यावधि न केनापि कृतमिति सर्वथा प्रशंसार्हो यत्नः पुष्पादीक्षितमहोदयानाम्। ग्रन्थस्यास्य प्रकाशनेन व्याकरणाध्येतॄणां महानुपकारो भविष्यतीति न सन्देहः।

राष्ट्रपतिसम्मानेन विभूषिता डॉ.श्रीमतीपुष्पादीक्षितमहोदया 'अष्टाध्यायी-सहजबोध'नाम्ना चतुरो ग्रन्थानथ चार्धधातुकप्रत्ययानामिडागमव्यवस्थेत्यादीन् ग्रन्थान् विरचय्य देदीप्यमानां कीर्तिं स्थापितवती। तासां नवीनतमा चिन्तनधारा सर्वथानुपमा--भिनन्दनीया च। ताभिः प्रणीतोऽयं व्याकरणग्रन्थो विश्वविश्रुतो भवत्विति प्रार्थये-ऽहमनाथनाथस्य नीलाचलनाथस्य सर्वविद्योद्भावकस्य श्रीजगन्नाथस्य चरणकमलयोः -

प्रो. किशोरचन्द्रपाढीः

आचार्योऽध्यक्षश्च व्याकरणविभागे

श्रीजगन्नाथसंस्कृतविश्वविद्यालये, उत्कलप्रदेशे।

# अवश्यवक्तव्यम्

बहूनि व्याकरणतन्त्राणि प्रोक्तानि बहुभिर्महर्षिभिर्भगवतः पाणिनेः प्रागपि, किन्तु तत्र न विद्यते साङ्गत्वम्। सूत्रपाठो, धातुपाठो, गणपाठ, उणादिपाठो लिङ्गानुशासनञ्चेति मिलित्वा पञ्चाङ्गं भवति व्याकरणम्। तच्चास्ति पाणिनीये। अथ च वैदिकशब्दानामनुशासनाद् वेदाङ्गत्वमपि। अतश्च प्राचीनेषु सकलेषु व्याकरणशास्त्रेषु पाणिनीयं व्याकरणं प्राधान्यं भजते। द्वादशशताब्द्याः प्राङ् नैकोऽपि प्रक्रियाग्रन्थ आसीत्। तदा शास्त्राणां, महाकाव्यानां च प्रणेतारोऽपि पाणिन्यादीनामाचार्याणां ग्रन्थक्रमेणैव व्याकरणमधीत्यापारशब्दशास्त्रपारं जग्मुः।

प्रक्रियाग्रन्थानां प्रणेतारोऽष्टाध्यायीं पुरस्कृत्याष्टाध्यायीसाधनायैव प्रक्रियाग्रन्थान् विरचयामासुः। अतश्च लिखितवन्तो भट्टोजिदीक्षितमहाभागाः सिद्धान्तकौमुद्या लौकिक--भागस्यान्ते -

इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम्।
विस्तरस्तु यथाशास्त्रं द्रष्टव्यं शब्दकौस्तुभे।।

सर्वथा सत्यमिदं वचनं, यतः प्रक्रियाग्रन्थेषु सूत्रस्य तावानेवार्थः प्रकाशमेति यावतेष्टप्रयोगसिद्धिः संजायते। अवशिष्टार्थस्तु बुद्धिगम्य एवावसीयते।

अतश्च यथाष्टाध्यायीं पुरस्कृत्य प्रक्रियाग्रन्था विरचितास्तथैवाष्टाध्यायीं पुरस्कृत्यैव तेऽध्येतव्या अपि। किन्तु प्रक्रियाग्रन्थानामवतारानन्तरं राष्ट्रेऽस्मिन्नपूर्वः कोऽपि क्रमः प्रादुरभूत्, यत्र पाणिन्यष्टाध्यायीमनवलोक्यैव सर्वं पाणिनीयशास्त्रमधीयते। अत्रैकैकं प्रयोगं पुरस्कृत्य तत्साधनाय सर्वाणि सूत्राण्युपस्थाप्यन्ते, बहुभिश्च तैः सूत्रैरेक एव प्रयोगः साध्यते। तान्येव सूत्राणि यद्यष्टाध्यायीं विज्ञाय पठ्येरन्, तदा तैरेव सूत्रैरनन्तः शब्दराशिः साधयितुं शक्येत। अतश्च पुना राष्ट्रेऽस्मिन्नष्टाध्यायीसूत्रपाठेन पदं न्यधायि।

दुश्चरतपसा भगवान् पाणिनिर्निखिललौकिकवैदिकशब्दराशेः प्रत्यक्षमेककाला--वच्छेदेन कृत्वा प्रकृत्यादिविभागकल्पनया सामान्यविशेषवता लक्षणेनापूर्वमिदं शास्त्रं कृतवान्, येनाखिला लौकिका, वैदिकाश्च शब्दा अल्पीयसा कालेन सिध्यन्ति।

अष्टाध्यायीविषयास्त्रिषु भागेषु विभक्ताः प्रतीयन्ते -

१. प्रथमद्वितीयाध्याययोः वाक्येभ्यः पदानां संकलनम्।

२. तृतीयचतुर्थपञ्चमाध्यायेषु पदानां प्रकृतिप्रत्ययविभागः।

३. षष्ठसप्तमाष्टमाध्यायेषु प्रकृति-प्रत्ययैः सह आगमादेशादीनां संयोजनेन परिनिष्ठितपदानां निर्माणञ्च।

यथा भगवान् भास्करोऽखिलं विश्वं प्रकाशयति तथैव पाणिनेरेकैकं सूत्रमप्यखिलं लौकिकवैदिकशब्दराशिं प्रकाशयति।

प्रक्रियाक्रमे फक्किकादीनां दुरूहत्वमनुभूय छात्रा व्याकरणाध्ययनात्पराजयन्ते। किन्तु पाणिनीयशास्त्रेऽस्मिन् गुणवृद्धिदीर्घनलोपनुमागमसम्प्रसारणादीनां कार्याणां कृत एकैकं प्रकरणं वर्तते, यस्य विज्ञानेन तत्कार्यं निखिललौकिकवैदिकशब्दराशिषु कर्तुं शक्यते। तत्र न किमपि रिष्यति। यद्यष्टाध्याय्या अधिकारप्रकरणविभाजनमविज्ञाय तस्याः पाठो नित्यमपि क्रियेत, तदा निगदेनैव शब्दायमानोऽन्धधावनमिव स निष्फलतामेति, इति भूयो भूयो 'मनस्यवकलय्य मयाधिकारप्रकरणनिर्देशसमन्वितो नवीनोऽयमष्टाध्यायीसूत्रपाठो महता यत्नेन यथामति विरचितः, येन कार्याणां विज्ञानं पाठेन सहैव स्वयमेव जायते।

सूत्रेषु '–' अयं चिह्न उच्चारणसौकर्याय दत्तो, न तु सन्धिविच्छेदाय। अनेन पाठशुद्धिर्भविष्यति। यतः पाठकाले सन्धिविच्छेदस्तु नैवापेक्ष्यते।

विषयानुक्रमण्यां पाणिनीयाष्टाध्याय्याः सर्वाः संज्ञाः, सर्वाः परिभाषाः, सर्वेऽतिदेशा अधिकाराश्च निष्कृष्यादौ पठिताः। विधयोऽधिकारा नियमाश्च प्रकरणेषु निबद्धाः सन्तीति, तेषां विभागस्तेषु तेष्वध्यायेष्वेव पृथक्कृत्य प्रदर्शितः। अनया सर्वाष्टाध्यायी हस्तामलकवद्-वलोकितुं शक्यते।

प्रथमे दिवसेऽस्या द्वावध्यायौ, अनन्तरमेकैकः प्रतिदिनमिति कृत्वा अस्याः सप्ताहपारायणेन पाणिनीयशास्त्रे निर्बाधगतिर्भवति। यद्येनामधिगत्य पुरस्कृत्य च सिद्धान्तकौमुद्यादयो ग्रन्था अधीयेरन्, तदा सूत्रेष्वनुवृत्तिविषयिणी, पौर्वापर्यविषयिणी न जनिष्यते विचिकित्सापि। अथ च सूत्रस्य निखिलोऽर्थो बुद्धौ स्फुटीभविष्यति।

भवानीशंकराविव मातापितरौ जानकीसुन्दरलालशुक्लौ प्रणम्य, गुरुचरणान् आचार्यविश्वनाथत्रिपाठिमहाभागान्, आचार्य-डॉ.बच्चूलालावस्थिमहाभागान् हृदि निधाय, अथ चाचार्यरामयत्नशुक्लमहाभागान्, आचार्यरामकरणशर्ममहाभागान् भूयो भूयोऽभिवन्द्य मदीयः संकल्पोऽयं पूर्णतामुपगतः। महत्यस्मिन् कार्ये वैयाकरणतल्लजाया डॉ. पाठकमनीषायाः साहाय्यं प्रतिपदं लब्धमिति ताः सादरं स्मर्तव्याः। अथ च यैरस्य ग्रन्थस्य पाठशोधनं महत्या सूक्ष्मेक्षिकया कृतं त आचार्यडॉ.बलरामशुक्लमहाभागा अपि महत्त्वमस्य कार्यस्य मीमांसमानाः सर्वथा शुभाशीर्भाजः। कार्येऽस्मिन् रतस्य शिष्यस्याऽभिजिद्-दीक्षितस्य, अथ च पाणिनीयशास्त्रम्-धीयानाया माधुरी तामस्कर इत्यस्याः पाणिनीयशास्त्रेऽव्याहतगतिर्भूयादिति कामये। छात्रश्चन्दनजैनोऽपि टङ्कणादिषु सहकारीत्यविस्मर्तव्यः। येषां वामाङ्गे निषद्य मयाहर्निशं सेव्यते भगवान् पाणिनिस्ते दीक्षितशिवप्रसादमहाभागा अपि वन्द्याः। यस्य भ्रुकुटिविलासेनैव सृष्टिलयौ भवतस्तस्यैव कृपाकटाक्षेण कार्यमिदं निष्पन्नमिति तच्चरणयोः प्रणमतीयम् ----

गीता-जयन्ती

२०६६ विक्रमाब्दे।

९.१२.२००८ दिनाङ्के

# विषयानुक्रमणी



## अष्टाध्यायीसूत्रपाठः

(प्रकरणनिर्देशसमन्वितः)

# आदौ पुस्तकशोधनम्

| पृष्ठम् | सूत्राङ्कः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| x | – | फक्किादीनां | फक्किकादीनाम् |
| 5 | अष्टाध्यायीक्रमेण विषयानुक्रमणी | त्वतलाधिकारः | त्वतलोरधिकारः |
| 12 | 50 | तथायुक्त | तथायुक्तं |
| 24 | 112 | भृञोऽन्यतरस्याम् | भृञोऽसंज्ञायाम् |
| 31 | 165 | जागरूकः | जागुरूकः |
| 34 | 87 | निमित्तम् | निमितम् |
| 39 | 97 | परस्मैदेषु | परस्मैपदेषु |
| 44 | 150 | ण फिञौ | णफिञौ |
| 45 | 3 | युक्त | युक्तः |
| 45 | 2 | – | लाक्षारोचनाट्ठक् |
| 58 | 119 तः नीचैः | त्वतलाधिकारः | त्वतलोरधिकारः |
| 58 | 122 | पृथ्वादिभ्यः | पृथ्वादिभ्य |
| 59 | 132 | गुरु – | गुरू — |
| 59 | 27 | नानञौ | नानाञौ |
| 62 | 127 | अर्श आ– | अर्शआ |
| 64 | 103 | यः | यत् |
| 76 | 126 | चेट | चेल |
| 78 | 6 | आत्मनश्च पूरणे | आत्मनश्च |
| 78 | 9 | सप्तम्या | सप्तम्याः |
| 83 | 61 | – | वाऽऽक्रोशदैन्ययोः |
| 84 | 89 | ऊदुपधायाः | ऊदुपधाया |
| 86 | 153 | बिल्वा– | बिल्वका– |
| 88 | 92 | सख्युरम्बुद्धौ | सख्युरसम्बुद्धौ |
| 98 | 33 | अङ्गात्प्रातिलोम्ये | अङ्गप्रातिलोम्ये |
| 98 | 48 | किवृत्तं | किंवृत्तं |
| 100 | 39 तः नीचैः | तथो धः | तथोर्धः |
| 100 | 47 | श्यो स्पर्शे | श्योऽस्पर्शे |
| 103 | 37 | कुप्वो | कुप्वोः |

# अष्टाध्यायीविषयानुक्रमणी

अस्यामनुक्रमण्यां पाणिनीयाष्टाध्याय्याः सर्वाः संज्ञाः, सर्वाः परिभाषाः, सर्वेऽधिकाराः, सर्वेऽतिदेशाश्च निष्कृष्यादौ पठिताः। विधयो नियमाश्च प्रकरणेषु निबद्धाः सन्तीति, तेषां विभाग एतदनन्तरं तेषु तेष्वध्यायेष्वेव पृथक्कृत्य प्रदर्शितः।

## संज्ञाः

५३. गतिसंज्ञा १.४.६०-७९
५४. परस्मैपदसंज्ञा १.४.९९
५५. उत्तमसंज्ञा १.४.१०१
५६. प्रथमसंज्ञा १.४.१०१
५७. मध्यमसंज्ञा १.४.१०१
५८. एकवचनसंज्ञा १.४.१०२-३
५९. द्विवचनसंज्ञा १.४.१०२-३
६०. बहुवचनसंज्ञा १.४.१०२-३
६१. विभक्तिसंज्ञा १.४.१०४
६२. अवसानसंज्ञा १.४.११०
६३. उपसर्गसंज्ञा १.४.५९
६४. कर्मप्रवचनीयसंज्ञा १.४.८३-९८
६५. आत्मनेपदसंज्ञा १.४.१००
६६. संहितासंज्ञा १.४.१०९
६७. समाससंज्ञाधिकारः २.१.३
६८. अव्ययीभावसंज्ञा २.१.५
६९. तत्पुरुषसंज्ञा २.१.२२
७०. द्वन्द्वसंज्ञा २.२.२९
७१. द्विगुसंज्ञा २.१.२३
७२. बहुव्रीहिसंज्ञा २.२.२३
७३. आमन्त्रितसंज्ञा २.३.४८
७४. सम्बुद्धिसंज्ञा २.३.४९
७५. प्रत्ययसंज्ञा ३.१.१
७६. धातुसंज्ञा ३.१.३२ (आतिदेशिकधातवः)
७७. उपपदसंज्ञा ३.१.९२
७८. कृत्संज्ञा ३.१.९३
७९. कृत्यसंज्ञा ३.१.९५
८०. सत्संज्ञा ३.२.१२७
८१. सार्वधातुकसंज्ञा ३.४.११३
८२. आर्धधातुकसंज्ञा ३.४.११४-११७
८३. तद्धितसंज्ञा ४.१.७६
८४. गोत्रसंज्ञा ४.१.१६२
८५. युवसंज्ञा ४.१.१६३-१६७
८६. तद्राजसंज्ञा ४.१.१७४
८७ विभक्तिसंज्ञा ५.३.१
८८. तद्राजसंज्ञा ५.३.११९
८९. अभ्याससंज्ञा ६.१.४
९०. अभ्यस्तसंज्ञा ६.१.५
९१. आम्रेडितसंज्ञा ८.१.२

### अर्थविशिष्टशब्दस्वरूपग्राहकसूत्रम्

९२. स्वं रूपं शब्दस्याशब्दसंज्ञा १.१.६८

### सवर्णग्राहकसूत्रम्

९३. अणुदित्सवर्णस्य चाप्रत्ययः १.१.६९
९४. तपरस्तत्कालस्य १.१.७०

### तदन्तग्राहकसूत्रम्

९५. येन विधिस्तदन्तस्य १.१.७२

## परिभाषाः

१. इको गुणवृद्धी १.१.३
२. आद्यन्तवदेकस्मिन् १.१.२१
३. आद्यन्तौ टकितौ १.१.४६
४. मिदचोऽन्त्यात्परः १.१.४७
५. एच इग्घ्रस्वादेशे १.१.४८
६. षष्ठी स्थानेयोगा १.१.४९
७. स्थानेऽन्तरतमः १.१.५०
८. उरण् रपरः १.१.५१
९. अलोऽन्त्यस्य १.१.५२
१०. ङिच्च १.१.५३
११. आदेः परस्य १.१.५४
१२. अनेकाल् शित् सर्वस्य १.१.५५
१३. प्रत्ययलोपे प्रत्ययलक्षणम् १.१.६२।
१४. न लुमताऽङ्गस्य १.१.६३
१५. तस्मिन्निति निर्दिष्टे पूर्वस्य १.१.६६
१६. तस्मादित्युत्तरस्य १.१.६७

## अतिदेशा:



## अधिकारा:

### १. एकसंज्ञाधिकार:



### २. कारकसंज्ञाधिकार:



### ३. निपातसंज्ञाधिकार:



### ४. कर्मप्रवचनीयसंज्ञाधिकार:



### ५. समासाधिकार:

६. अव्ययीभावाधिकारः

अव्ययीभावः २.१.५-२.१.२१

७. तत्पुरुषाधिकारः

तत्पुरुषः २.१.२२-२.२.२२

८. अनभिहिताधिकारः

अनभिहिते २.३.१-७३

९. तत्पुरुषे नपुंसकाधिकारः

तत्पुरुषोऽनञ्कर्मधारयः २.४.१९-२५

१०. आर्धधातुक इत्यधिकारः

आर्धधातुके २.४.३५-५७

११. प्रत्ययाधिकारः

प्रत्ययः ३.१.१-५.४.१६०

१२. प्रत्ययस्य परत्वाधिकारः

परश्च ३.१.२-५.४.१६०

१३. प्रत्ययस्याद्युदात्तत्वाधिकारः

आद्युदात्तश्च ३.१.३-५.४.१६०

१४. धात्वधिकारः (प्रथमः)

धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३.१.२२-३.१.९०। अस्य सूत्रस्यैकदेशो 'धातोः' इत्यधिक्रियते।

१५. धात्वधिकारः(द्वितीयः)

धातोः ३.१.९१-३.४.११७

१६. भूताधिकारः

भूते ३.२.८४-१२२

१७. वर्तमानाधिकारः

वर्तमाने लट् ३.२.१२३-३.३.१। अस्य सूत्रस्यैकदेशो 'वर्तमाने' इत्यधिक्रियते।

१८. ताच्छील्याद्यर्थाधिकारः

आ क्वेस्तच्छील-तद्धर्म-तत्साधुकारिषु ३.२.१३४-१७७।

१९. भविष्यदधिकारः

भविष्यति गम्यादयः ३.३.३-१५

२०. भावाधिकारः

भावे ३.३.१८-११२

२१. 'अकर्तरि च कारके संज्ञायाम्' इत्यधिकारः

अकर्तरि च कारके संज्ञायाम् ३.३.१९-११२

२२. स्त्र्यधिकारः

स्त्रियां क्तिन् ३.३.९४-११२। अस्य सूत्रस्यैकदेशः 'स्त्रियां' इत्यधिक्रियते।

२३. करणाधिकरणयोः इत्यधिकारः

करणाधिकरणयोश्च ३.३.११७-१२५

२४. लाधिकारः

लस्य ३.४.७७-११२

२५. प्रातिपदिकाधिकारः

ङ्याप्प्रातिपदिकात् ४.१.१-५.४.१६०

२६. स्त्र्यधिकारः

स्त्रियाम् ४.१.३-४.१.८१

२७. अनुपसर्जनाधिकारः

अनुपसर्जनात् ४.१.१४-८१

२८. तद्धिताधिकारः

तद्धिताः ४.१.७६-५.४.१६०

२९. समर्थाधिकारः

समर्थानां प्रथमाद्वा ४.१.८२-५.२.१४०

३०. अणधिकारः प्राग्दीव्यतीयः

प्राग्दीव्यतोऽण् ४.१.८३-४.४.१

३१. शेषाधिकारः

शेषे ४.१.९२-४.३.१२०

३२. ठगधिकारः प्राग्वहतीयः

प्राग्वहतेष्ठक् ४.४.१-४.४.७४

३३. यदधिकारः प्राग्घितीयः

प्राग्घिताद्यत् ४.४.७५-५.१.१३६

३४. छाधिकारः प्राक्क्रीतीयः

प्राक् क्रीताच्छः ५.१.१-५.१.१७

३५. ठञधिकारः प्राग्वतीयः

प्राग्वतेष्ठञ् ५.१.१८-५.१.११४

३६. ठगधिकारः प्रागार्हीयः

आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्

५.१.१९-५.१.६३

३७. कालाधिकारः

कालात् ५.१.७८-५.१.९७

३८. त्वतलोधिकारः

आ च त्वात् ५.१.१२०-१३६

३९. किंसर्वनामादिप्रकृत्यधिकारः

किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ५.३.२-२६

४०. काधिकारः

प्रागिवात्कः ५.३.७०-५.३.९५

४१. समासान्ताधिकारः

समासान्ताः ५.४.६८-१६०

४२. संहिताधिकारः (प्रथमः)

संहितायाम् ६.१.७१-१५४

४३. एकः पूर्वपरयोरित्यधिकारः

एकः पूर्वपरयोः ६.१.८३-१०९

४४. सुट्कात्पूर्व इत्यधिकारः

सुट्कात्पूर्वः ६.१.१३३-१५४

४५. पूर्वपदाद्युदात्तस्वराधिकारः

आदिरुदात्तः ६.२.६४-९१

४६. पूर्वपदान्तोदात्तस्वराधिकारः

अन्तः ६.२.९२-११०

४७. उत्तरपदाद्युदात्तस्वराधिकारः

उत्तरपदादिः ६.२.१११-१४२

४८. उत्तरपदान्तोदात्तस्वरप्रकरणम्

अन्तः ६.२.१४३-१९९

४९. 'उत्तरपदे' इत्यधिकारः

अलुगुत्तरपदे ६.३.१-१३९

अत्र विवेकः, 'अलुगिति' ६.३.२४ इत्यन्तमधिक्रियते। 'उत्तरपदे' इति च ६.३.१ इत्यतः ६.३.१३९ इत्यन्तमधिक्रियते।

५० संहिताधिकारः (द्वितीयः)

संहितायाम् ६.३.११४-१३९

५१. अङ्गाधिकारः

अङ्गस्य ६.४.१-७.४.९७

५२. असिद्धवदधिकारः

असिद्धवदत्राभात् ६.४.२२-६.४.१७५

५३. आर्धधातुक इत्यधिकारः

आर्धधातुके ६.४.४६-७०

५४. भाधिकारः

भस्य ६.४.१२९-१७५

५५. मपर्यन्तस्येत्यधिकारः

मपर्यन्तस्य ७.२.९१-९८

५६. उत्तरपदस्येत्यधिकारः

उत्तरपदस्य ७.३.१०-३२

५७. द्विरुक्ताधिकारः

सर्वस्य द्वे ८.१.१-१५

५८. 'पदस्य' इत्यधिकारः

पदस्य ८.१.१६-८.३.५५

५९. 'पदात्' इत्यधिकारः

पदात् ८.१.१७-६९

६०. 'अनुदात्तं सर्वमपादादौ' इत्यधिकारः

अनुदात्तं सर्वमपादादौ ८.१.१८-७४

६१. पूर्वत्रासिद्धत्वाधिकारः

पूर्वत्रासिद्धम् ८.२.१-८.४.६८

६२. वाक्यस्य टेः प्लुत उदात्त इत्यधिकारः

वाक्यस्य टेः प्लुत उदात्तः ८.२.८२-१०८

६३. संहिताधिकारः (तृतीयः)

तयोर्य्वावचि संहितायाम् ८.२.१०८-८.४.६८

६४. अपदान्तस्य मूर्धन्यः इत्यधिकारः

अपदान्तस्य मूर्धन्यः ८.३.५५-११९

६५. 'इण्कोः' इत्यधिकारः

इण्कोः ८.३.५७-११९

६६. सुप्सुपाधिकारः

सह सुपा २.१.४-२.२.३८

६७. विभाषाधिकारः

विभाषा २.१.११-२.२.३८

६८. कृत्यसंज्ञाधिकारः

कृत्याः ३.१.९५-३.१.१३२

६९. वा ल‍ृङधिकारः

वोताप्योः ३.३.१४१-३.३.१५१

७०. विभक्तिसंज्ञाधिकारः

प्राग्दिशो विभक्तिः ५.३.१-५.३.२६

७१. हलादिधातुद्वित्वाधिकारः

एकाचो द्वे प्रथमस्य ६.१.१-६.१.१२

७२. अजादिधातुद्वित्वाधिकारः

अजादेर्द्वितीयस्य ६.१.२-६.१.१२

७३. अभ्यासकार्याधिकारः

अत्र लोपोऽभ्यासस्य ७.४.५८-७.४.९७

७४. अनुनासिकविध्यधिकारः

अत्रानुनासिकः पूर्वस्य तु वा ८.३.२-८.३.१२

**संज्ञा उक्ताः, परिभाषा, अतिदेशा अधिकाराश्चोक्ताः, इदानी-मवशिष्टविषयोऽष्टाध्यायी क्रमेण विभज्य प्रदर्श्यते**

**प्रथमाध्याये प्रथमः पादः**

गुणवृद्धिनिषेधः १.१.४-१.१.६

**प्रथमाध्याये द्वितीयः पादः**

स्वरिते उदात्तांश-अनुदात्तांश-निर्णयः १.२.३२
सन्नतरादेशः १.२.४०
ह्रस्वविधिः १.२.४७-४८
स्त्रीप्रत्ययस्य लुक् १.२.४९
गोण्या इकारादेशः १.२.५०
लुपि युक्तवद्भावः १.२.५१-५२
अशिष्यप्रकरणम् १.२.५३-५७
वचननिर्धारणम् १.२.५८-६३
एकशेषप्रकरणम् १.२.६४-७३

**प्रथमाध्याये तृतीयः पादः**

इत्-लोप-विधिः १.३.९
आत्मनेपदप्रकरणम् १.३.१२-७१
उभयपदप्रकरणम् १.३.७२-७७
परस्मैपदप्रकरणम् १.३.७८-९३

**प्रथमाध्याये चतुर्थः पादः**

बहुवचनविधिः १.४.२१
एकवचन-द्विवचन-विधिः १.४.२२
मध्यमपुरुषविधिः १.४.१०५-६
उत्तमपुरुषविधिः १.४.१०७
प्रथमपुरुषविधिः १.४.१०८

**द्वितीयाऽध्याये प्रथमद्वितीयपादौ**

**समासाधिकारः २.१.१-२.२.३८**

अव्ययीभावसमासः २.१.५-२१
तत्पुरुषसमासः २.१.२२-२.२.२२
बहुव्रीहिसमासः २.२.२३-२८
द्वन्द्वसमासः २.२.२९
पूर्वनिपात-परनिपातप्रकरणम् २.२.३०-३८

**द्वितीयाऽध्याये तृतीयः पादः**

अयं विभक्तिपादः अत्र विभक्तीनां विधानम् २.३.१-७३

**द्वितीयाऽध्यायस्य चतुर्थः पादः**

समासानां वचननिर्णयः २.४.१-१६
समासानां लिङ्गनिर्णयः २.४.१७-१८

**तत्पुरुषे नपुंसकाधिकारः २.४.१९-३१**

**अन्वादेशप्रकरणम् २.४.३२-३४**

**आर्धधातुकाधिकारः**
अधिकारेऽस्मिन् आर्धधातुके प्रत्यये धात्वादेशाः २.४.३५-५७

लुक्प्रकरणम् २.४.५८-८४
लादेशः - २.४.८५

**तृतीयाध्याये प्रथमद्वितीयपादौ**

अध्यायेऽस्मिन् धातुभ्यः प्रत्ययानां विधानम् वर्तते। अत्र -

प्रत्ययाधिकारः ३.१.१-५.४.१६०

प्रत्ययस्य परत्वाधिकारः ३.१.२- ५.४.१६०

प्रत्ययस्याद्युदात्ताधिकारः ३.१.३-५.४.१६०

**धात्वधिकारः प्रथमः**

३.१.२२-९०

अत्र ३.१.५-३१ इति यावद् धातुभ्यो विहिताः सनादयो धातुप्रत्ययाः। ३.१.३३-८६ इति यावद् धातुभ्यो विहिता विकरणप्रत्ययाः। ३.१.८७-८९ यावत् कर्मवद्भावः।

**धात्वधिकारो द्वितीयः**

३.१.९१-३.४.७६

अत्र धातुभ्यो विहिताः कृत् प्रत्यया लकारप्रत्ययाश्च सन्ति।

**कृत्यप्रत्ययाः**

३.१.९५-१३२

**कृत्प्रत्ययाः सामान्याः**

३.१.१३३-३.२.८३

**भूताधिकारः**

३.२.८४-१२२

अत्र भूतार्थे लकारप्रत्ययाः, कृत्प्रत्ययाश्च

**वर्तमानाधिकारः**

३.२.१२३-३.३.१

अत्र वर्तमानार्थे लकारप्रत्ययाः, कृत्प्रत्ययाश्च।

**वर्तमाने शित्प्रत्ययाः**

शतृ, शानच्, चानश् शानन्

३.२.१२३-१३३

**वर्तमाने ताच्छील्याद्यर्थाधिकारः**

३.२.१३४-१७८

अत्र ताच्छील्याद्यर्थे वर्तमाने कृत्प्रत्ययाः।

**वर्तमाने डु-ष्ट्रन्-इत्र-क्त-प्रत्ययाः**

३.२.१७९-१८८

**तृतीयाध्याये तृतीयचतुर्थपादौ**

**भविष्यदधिकारः**

३.३.३-१५

अत्र भविष्यदर्थे लकारप्रत्ययाः, कृत्प्रत्ययाश्च।

**इत उत्तरं त्रिषु कालेषु कृत्प्रत्ययाः।**

**भावाधिकारः**

३.३.१८-३.३.११२

अधिकारेऽस्मिन् भावे कृत्प्रत्ययाः। अकर्तरि च कारके संज्ञायाम् इत्यधिकारः ३.३.१९-११२ इति यावत्।

**स्त्र्यधिकारः**

३.३.९४-११२

अधिकारेऽस्मिन् अकर्तरि कारके, संज्ञायां, भावे, स्त्रियाम् कृत्प्रत्ययाः।

**कृत्यल्युट्प्रत्ययानामर्थनिर्देशः**

३.३.११३

भावे क्त-ल्युट्प्रत्ययौ ३.३.११४-११६

**करणाधिकरणयोः प्रत्ययाः**
३.३.११७-१२५

**कृच्छ्राकृच्छ्रार्थेषु प्रत्ययाः**
३.३.१२६-१३०

वर्तमानवत्प्रत्ययाः ३.३.१३१
भूतवत्प्रत्ययाः ३.३.१३२
लकारप्रत्यया, लकारार्थेषु विहिताः कृत्प्रत्यया, लकारार्थाश्च ३.३.१३३-३.४.५
अत्रैव लकारार्थेषु विहिताः कृत्प्रत्यया अपि।
वैदिकाः कृत्प्रत्ययाः ३.४.६-१७

**लौकिकाः कृत्प्रत्ययाः**
खमुञ्, क्त्वा, णमुल्, तुमुन् ३.४.१८-६६

**कृत्प्रत्ययानां लकाराणां चार्थाः**
३.४.६७-७६

**लाधिकारः**
अत्र लादेशास्तिङः, तिङादेशाश्चान्ये।
३.४.७७-११७

**चतुर्थाध्यायस्य १,२,३ पादाः**

**ङ्याप्प्रातिपदिकात् ४.१.१**
इतः प्रातिपदिकाधिकारः ४.१.१-५.४.१६० इति यावत्

स्वादिप्रत्ययाः ४.१.२

**'स्त्रियाम्' इत्यधिकारः**
४.१.३-८१ इति यावत् स्त्रीप्रत्ययाः

**तद्धिताधिकारः**
४.१.७६-५.४.१६०

**समर्थाधिकारः**
४.१.८२-५.२.१४०
अत्र पञ्चमहोत्सर्गप्रत्ययेषु तद्धितार्थानां विभाजनम् वर्तते

**१. अणधिकारः प्राग्दीव्यतीयः**
४.१.८३-४.३.१६८
अधोनिर्दिष्टेषु ४४ प्राग्दीव्यतीयेष्वर्थेषु अण् प्रत्ययोऽधिकृतो वेदितव्यः

१. तस्यापत्यम् ४.१.९२-१७८
२. तेन रक्तं रागात् ४.२.१
३. नक्षत्रेण युक्त कालः ४.२.३
४. दृष्टं साम ४.२.७
५. परिवृतो रथः ४.२.१०
६. तत्रोद्धृतममत्रेभ्यः ४.२.१४
७. संस्कृतं भक्षाः ४.२.१६
८. सास्मिन्पौर्णमासीति संज्ञायाम् ४.२.२१
९. सास्य देवता ४.२.२४
१०. तस्य समूहः ४.२.३७
११. विषयो देशे ४.२.५२
१२. सोऽस्यादिरितिच्छन्दसः प्रगाथेषु ४.२.५५
१३. तदस्यां प्रहरणमिति क्रीडायां णः ४.२.५७
१४. तदधीते तद्वेद ४.२.५९

**चतुरर्थाः**

१५. तदस्मिन्नस्तीति देशे तन्नाम्नि ४.२.६७
१६. तेन निर्वृत्तम् ४.२.६८
१७. तस्य निवासः ४.२.६९
१८. अदूरभवश्च ४.२.७०

**अथ शेषे इत्यधिकारः**
'४.२.९२' इत्यारभ्य 'तस्य विकारः ४.३.११४' इति यावत्

१९. तत्र जातः ४.३.२५
२०. कृतलब्धक्रीतकुशलाः ४.३.३८
२१. प्रायभवः ४.३.३९
२२. संभूते ४.३.४१
२३. कालात्साधुपुष्प्यत्पच्यमानेषु ४.३.४३
२४. उप्ते च ४.३.४४
२५. देयमृणे ४.३.४७
२६. व्याहरति मृगः ४.३.५१
२७. तदस्य सोढम् ४.३.५२
२८. तत्र भवः ४.३.५३
२९. तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ४.३.६६
३०. तत आगतः ४.३.७४
३१. प्रभवति ४.३.८३
३२. तद्गच्छति पथिदूतयोः ४.३.८५
३३. अभिनिष्क्रामति द्वारम् ४.३.८६
३४. अधिकृत्य कृते ग्रन्थे ४.३.८७
३५. सोऽस्य निवासः ४.३.८९
३६. अभिजनश्च ४.३.९०
३७. भक्तिः ४.३.९५
३८. तेन प्रोक्तम् ४.३.१०१
३९. तेनैकदिक् ४.३.११२
४०. उपज्ञाते ४.३.११५
४१. कृते ग्रन्थे ४.३.११६
४२. तस्येदम् ४.३.१२०

प्राण्योषधिवृक्षेभ्यो विकारावयवयोरर्थयोः यथाविहितप्रत्यया भवन्ति। प्राण्योषधिवृक्षान्यप्रकृतिभ्यः शैषिका एवेति विवेकः।

४३. तस्य विकारः ४.३.१३४
४४. अवयवे च प्राण्योषधिवृक्षेभ्यः ४.३.१३५

## चतुर्थाध्याये चतुर्थः पादः

**२. ठगधिकारः प्राग्वहतीयः**
४.४.१-४.४.७४
अधोनिर्दिष्टेषु ३६ प्राग्वहतीयेष्वर्थेषु ठक् प्रत्ययोऽधिकृतो वेदितव्यः

१. तेन दीव्यति खनति जयति जितम् ४.४.२
२. संस्कृतम्
३. तरति ४.४.५
४. चरति ४.४.८
५. वेतनादिभ्यो जीवति ४.४.१२
६. हरत्युत्सङ्गादिभ्यः ४.४.१५
७. निर्वृत्तेऽक्षद्यूतादिभ्यः ४.४.१९
८. संसृष्टे ४.४.२२
९. व्यञ्जनैरुपसिक्ते ४.४.२६
१०. ओजःसहोम्भंसा वर्तते ४.४.२७
११. प्रयच्छति गर्ह्यम् ४.४.३०
१२. उञ्छति ४.४.३२
१३. रक्षति ४.४.३३
१४. शब्ददर्दुरं करोति ४.४.३४
१५. पक्षिमत्स्यमृगान्हन्ति ४.४.३५
१६. परिपन्थं च तिष्ठति ४.४.३६
१७. माथोत्तरपदपदव्यनुपदं धावति ४.४.३७
१८. पदोत्तरपदं गृह्णाति ४.४.३९
१९. धर्मं चरति ४.४.४१
२०. प्रतिपथमेति ठंश्च ४.४.४२
२१. समवायान् समवैति ४.४.४३

**३. यदधिकार: प्राग्घितीय:**

**४.४.७५-४.४.१४४**

**अधोनिर्दिष्टेषु ३१ प्राग्घितीयेष्वर्थेषु यत् प्रत्ययोऽधिकृतो वेदितव्य:**



**पञ्चमाध्याये प्रथम: पाद:**

**४. छाधिकार: प्राक्क्रीतीय:**

**५.१.१-५.५.१.३७**

**अधोनिर्दिष्टेषु त्रिषु प्राक्क्रीतीयेष्वर्थेषु छ: प्रत्ययोऽधिकृतो वेदितव्य:**

**५. ठञधिकारः प्राग्वतीयः**
**५.१.१८-११५**
अधोनिर्दिष्टेषु २७ प्राग्वतीयेष्वर्थेषु ठञ् प्रत्ययोऽधिकृतो वेदितव्यः

**ठञधिकारमध्ये ठगधिकारः प्रागार्हीयः**

आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ५.१.१९। 'तदर्हति ५.१.६३' इत्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते, गोपुच्छादीन् वर्जयित्वा। इत्थञ्चैतेष्वेकादशस्वार्हीयेष्वर्थेषु गोपुच्छसंख्यापरिमाणादिभ्यष्ठञ् भवति, तदन्येभ्यष्ठगिति वेदितव्यम्। ठक्ठञोर्मध्ये स्वरे भेदः।

१. तेन क्रीतम् ५.१.३७
२. तस्य निमित्तं संयोगोत्पातौ ५.१.३८
३. तस्येश्वरः ५.१.४२
४. तत्र विदित इति च ५.१.४३
५. तस्य वापः ५.१.४५
६. तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते ५.१.४७
७. तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ५.१.५०
८. संभवत्यवहरति पचति ५.१.५२
९. सोऽस्यांशवस्नभृतयः ५.१.५६
१०. तदस्य परिमाणम् ५.१.५७
११. तदर्हति ५.१.६३

इत्यार्हीयाः

१२. पारायणतुरायणचान्द्रायणं वर्तयति ५.१.७२
१३. संशयमापन्नः ५.१.७३
१४. योजनं गच्छति ५.१.७४
१५. उत्तरपथेनाहृतं च ५.१.७७

**कालाधिकारः**

कालात् ५.१.७८ इत्यत आरभ्य 'व्युष्टादिभ्योऽण् ५.१.९७' इत्यतः प्रागधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्यते, कालादित्येवं तद्वेदितव्यम्।

१६. तेन निर्वृत्तम् ५.१.७९
१७. तमधीष्टो भृतो भूतो भावी ५.१.८०
१८. षष्टिकाः षष्टिरात्रेण पच्यन्ते ५.१.९०
१९. तेन परिजय्यलभ्यकार्यसुकरम् ५.१.९३
२०. तदस्य ब्रह्मचर्यम् ५.१.९४
२१. तस्य च दक्षिणा यज्ञाख्येभ्यः ५.१.९५
२२. तत्र च दीयते कार्यं भववत् ५.१.९६

इति कालाधिकारः

२३. संपादिनि ५.१.९९
२४. तस्मै प्रभवति संतापादिभ्यः ५.१.१०१
२५. समयस्तदस्य प्राप्तम् ५.१.१०४
२६. प्रकृष्टे ठञ् ५.१.१०८
२७. प्रयोजनम् ५.१.१०९

**अव्ययसंज्ञको वतिप्रत्ययः**
**५.१.११५-११८**

**भावकर्मार्थकाः प्रत्ययाः**
**५.१.११९-१३६**

समर्थानां प्रथमाद्वा (४.१.८६) इत्यधिकार इतो निवृत्तः।

**पञ्चमाध्याये द्वितीयः पादः**

पञ्चमाध्यायस्य द्वितीये पादे ५.२.१-९३ इति यावत् न कोऽपि प्रत्ययोऽधिक्रियते। स्फुटेष्वर्थेषु स्फुटप्रत्ययाः सन्ति। ते चार्थाः-

१. धान्यानां भवने क्षेत्रे खञ् ५.२.१
२. सर्वचर्मणः कृतः खखञौ ५.२.५
३. यथामुखसंमुखस्य दर्शनः खः ५.२.६
४. तत्सवदिः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ५.२.७
५. आप्रपदं प्राप्नोति ५.२.८
६. अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ५.२.९
७. परोवरपरंपरपुत्रपौत्रमनुभवति ५.२.१०
८. अवारपारात्यन्तानुकामं गामी ५.२.११
९. समां समां विजायते ५.२.१२
१०. अनुग्वलंगामी ५.२.१५
११. व्रातेन जीवति ५.२.२१
१२. तेन वित्तश्चुञ्चुप्चणपौ ५.२.२६
१३. तदस्य संजातं तारकादिभ्य इतच् ५.२.३६
१४. यत्तदेतेभ्यः परिमाणे वतुप् ५.२.३९
१५. किमः संख्यापरिमाणे डति च ५.२.४१
१६. तदस्मिन्नधिकमिति दशान्ताड्डः ५.२.४५
१७. संख्याया गुणस्य निमाने मयट् ५.२.४७
१८. तस्य पूरणे डट् ५.२.४८
१९. मतौ छः सूक्तसाम्नोः ५.२.५९
२०. तत्र कुशलः पथः ५.२.६३
२१. धनहिरण्यात्कामे ५.२.६५
२२. स्वाङ्गेभ्यः प्रसिते ५.२.६६
२३. उदराट्ठगाद्यूने ५.२.६७
२४. सस्येन परिजातः ५.२.६८
२५. अंशं हारी ५.२.६९
२६. तन्त्रादचिरापहृते ५.२.७०
२७. ब्राह्मणकोष्णिके संज्ञायाम् ५.२.७१
२८. शीतोष्णाभ्यां कारिणि ५.२.७२
२९. अनुकाभिकाभीकः कमिता ५.२.७४
३०. पार्श्वेनान्विच्छति ५.२.७५
३१. स एषां ग्रामणीः ५.२.७८
३२. शृङ्खलमस्य बन्धनं करभे ५.२.७९
३३. उत्क उन्मनाः ५.२.८०
३४. कालप्रयोजनाद्रोगे ५.२.८१
३५. तदस्मिन्नन्नं प्राये संज्ञायाम् ५.२.८३
३६. श्रोत्रियंश्छन्दोऽधीते ५.२.८४
३७. श्राद्धमनेन भुक्तमिनिठनौ।
३८. पूर्वादिनिः ५.२.८६
३९. सपूर्वाच्च ५.२.८७
४०. छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ५.२.८८
४१. अनुपद्यन्वेष्टा ५.२.९०
४२. साक्षाद् द्रष्टरि संज्ञायाम् ५.२.९१
४३. क्षेत्रियच्परक्षेत्रे चिकित्स्यः ५.२.९२

**अथ मत्वर्थीयाः**

तदस्यास्त्यस्मिन्निति मतुप् ५.२.९४ इत आरभ्य ५.२.१४० इत्यन्तम् 'अस्य' 'अस्मिन्' इत्यर्थे प्रत्यया भवन्ति।

**पञ्चमाध्याये तृतीयः पादः**

**विभक्तिसंज्ञकास्तद्धितप्रत्ययाः**

'पञ्चम्यास्तसिल् ५.३.७' इत आरभ्य 'दिक्शब्देभ्यः ५.३.२७' इत्यन्तं वक्ष्यमाणाः प्रत्ययाः, विभक्तिसंज्ञका अव्ययसंज्ञकाश्च।

**अव्ययसंज्ञकास्तद्धितप्रत्यया:**

इत आरभ्य 'याप्ये पाशप् ५.३.४७' इत्यत: प्राग् कथिता: प्रत्यया: 'तसिलादय: प्राक्पाशप:' इत्यनेन अव्यय-संज्ञका:। एषां विभक्तिसंज्ञा नास्ति।

**आतिशायिकप्रकरणम्**

५.३.५५-६५

**स्वार्थिकप्रत्यया:**

५.३.६-६९

**काधिकार:**

'प्रागिवात्क: ५.३.७०' इत्यारभ्य 'इवे प्रतिकृतौ ५.३.९६' इत्येतस्मात् प्राक् कप्रत्ययोऽधिकृत:।

**इवार्थे प्रत्यया:**

५.३.९६-१११

तद्राजप्रत्यया: ५.३.११२-११८

## पञ्चमाध्याये चतुर्थ: पाद:

**अव्ययसंज्ञकास्तद्धितप्रत्यया:**

१. तसिश्च ४.३.११३' इत्यनेन विधीय--मानस्तसि:।

२. किमेत्तिङव्ययघादाम्वद्रव्य० ५.४.११ इत्यनेन विधीयमानो आमु:, अमु चच्छन्दसि ५.४.१२ इत्यनेन विधीयमानो अमु:।

३. कृत्वसुच्-सुच्-धा-प्रत्यया:, '५.४.१७' इत्यत आरभ्य ५.५.२० इत्यन्ता:।

४. 'बहल्पार्थाच्छस्कारकादन्य० ५.४.४२' इत्यारभ्य प्राक् 'समासान्ता: ५.३.६८' इति प्रत्यया: 'शस्प्रभृतय: प्राक् समासान्तेभ्य:' इत्यनेन विधीयमाना: प्रत्यया:।

**समासान्ताधिकार:**

५.४.६८-१६०

अधिकारोऽयम्। आपादपरिसमाप्तेर्ये प्रत्यया विहितास्ते समासस्यान्तावयवा एकदेशा भवन्ति, तद्ग्रहणेन गृह्यन्त इति वेदितव्यम्।

## षष्ठाध्याये प्रथम: पाद:

**द्वित्वप्रकरणम्**

६.१.१-६.१.१२

**सम्प्रसारणप्रकरणम्**

६.१.१३-६.१.४४

**आत्त्वप्रकरणम्**

६.१.४५-५९

अमागमप्रकरणम् ६.१.५८-५९

प्रकृत्यादेशप्रकरणम् ६.१.६०-६४

लोपप्रकरणम् ६.१.६५-६९

तुगागमप्रकरणम् ६.१.७०-७५

**संहिताधिकार:**

६.१.७१-१५५ अत्राच्सन्धि:

यण्सन्धि: ६.१.७६

अयादिसन्धि: ६.१.७७-८२

**एक: पूर्वपरयोरित्यधिकार:**

अधिकारोऽयं ६.१.८३ इत्यत आरभ्य 'ख्यत्यात् परस्य ६.१.११०'इत्येतस्मात् सूत्रात् प्रागवतति। इत उत्तरं यद् वक्ष्यते, तत्र पूर्वस्य परस्य द्वयोरपि स्थाने एकादेशो भवतीत्येतद् वेदितव्यम्।

गुणसन्धिः ६.१.८६
वृद्धिसन्धिः ६.१.८७-९१
ओत आकारादेशः ६.१.९२
पररूपसन्धिः ६.१.९३-९८
सवर्णदीर्घसन्धिः ६.१.९९
पूर्वसवर्णदीर्घसन्धिः ६.१.१००-१०४
पूर्वरूपसन्धिः ६.१.१०५-१०८
ङसिङसोरुत्वम् ६.१.१०९-११०
रोरुत्वम् ६.१.१११-११२
प्रकृतिभावः ६.१.११३-१२८
पदस्य दिव उत्त्वम् ६.१.१२९
सुलोपसन्धिः ६.१.१३०-१३२

### सुट्कात्पूर्व इत्यधिकारः

अधिकारोऽयं ६.१.१३३ इत्यत आरभ्य 'पारस्करप्रभृतीनि च संज्ञायाम् ६.१.१५४' इति यावत्। इत उत्तरं यद्वक्ष्यते, तत्र सुडिति कात्पूर्व इति चैतदधिकृतं वेदितव्यम्।

### स्वरप्रकरणम्

६.१.१५५- ६.२.१९९

अन्तोदात्तस्वरप्रकरणम् ६.१.१५६-१८३
आद्युदात्तस्वरप्रकरणम् ६.१.१८४-२१७
अन्तोदात्तस्वरप्रकरणम् ६.१.२१८-२२०
समासस्वरः ६.१.२१८-६.२.१९९

## षष्ठाध्याये द्वितीयः पादः

### पूर्वपदस्य प्रकृत्या स्वरः

६.२.१-६३

पूर्वपदमित्यनुवतति। इत उत्तरं यद्वक्ष्यते, तत् पूर्वपदस्य भवतीत्येवं तद्वेदितव्यम्।

### पूर्वपदाद्युदात्तस्वराधिकारः

६.२.६४-९१

इत आदिरुदात्त इत्येतदधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यते, तत्र पूर्वपदस्यादिरुदात्तो भवतीत्येवं तद्वेदितव्यम्।

### पूर्वपदान्तोदात्तस्वराधिकारः

६.२.९२-११०

अन्त इत्यधिकृतम्। यदित उत्तरं वक्ष्यते, तत्र पूर्वस्यान्त उदात्तो भवतीत्येवमधिकृतं वेदितव्यम्।

### उत्तरपदाद्युदात्तस्वराधिकारः

६.२.१११-१४२

उत्तरपदादिरित्येतदधिकृतम्। यदित ऊर्ध्वमनुक्रमिष्यते, तत्र उत्तरपदस्यादिरुदात्तो भवतीत्येवमधिकृतं वेदितव्यम्। उत्तरपदस्येत्येतदापादपरिसमाप्तेः।

### उत्तरपदान्तोदात्तस्वरप्रकरणम्

६.२.१४३-१९९

अन्त इत्येतदधिकृतमापादान्तम्। यदित ऊर्ध्वमनुक्रमिष्यते, तत्र समासस्योत्तर--पदस्यान्त उदात्तो भवतीत्येवं तद् वेदितव्यम्।

## षष्ठाध्याये तृतीयः पादः

### 'उत्तरपदे' इत्यधिकारः

६३.१-.१३९

'अलुगिति' च 'उत्तरपदे' इति च एतदधिकृतं वेदितव्यम्। यदित ऊर्ध्वमनुक्रमिष्यते--ऽलुगुत्तरपदे इत्येवं तद् वेदितव्यम्। अत्र विवेकः,'अलुगिति'६.३.२४ इत्यन्तमधि-

क्रियते 'उत्तरपदे' इति च पादान्तमधिक्रियते।

**उत्तरपदेऽलुक्प्रकरणम्**
**६.३.१-२४**

**उत्तरपदे परे प्रकृत्यादेशाः**
**६.३.२५-११०**

उत्तरपद आनङ् ६.३.२५-३३
उत्तरपदे पुंवद्भावः ६.३.३४-४२
उत्तरपदे ह्रस्वः ६.३.४३-४५
उत्तरपद आत्त्वम् ६.३.४६-४७
उत्तरपदे प्रकृत्यादेशाः ६.३.४८-६६
उत्तरपदे मुमागमः ६.३.६७-७२
उत्तरपदे नञादेशाः ६.३.७३-७७
उत्तरपदे सहस्यादेशाः ६.३.७८-८३
उत्तरपदे समानस्यादेशाः ६.३.८४-८८
दृग्दृशवतुषु प्रकृत्यादेशाः ६.३.८९-९१
अञ्चतौ वप्रत्यये प्रकृत्यादेशाः ६.३.९२-९४
सहस्यादेशाः ६.३.९५-९६
अप आदेशाः ६.३.९७-९८
अन्यशब्दस्यादेशाः ६.३.९९-१००
कुशब्दस्यादेशाः ६.३.१०१-१०८
पृषोदरादीनि निपातनानि ६.३.१०९
अह्नशब्दस्यादेशाः ६.३.११०

**'उत्तरपदे दीर्घः'**
**६.३.१११-१३९**

'अङ्गस्य दीर्घः' ६.४.१८ इति यावत्

**द्वितीयः संहिताधिकारः**

'संहितायाम् ६.३.११४' इत्यधिकार आपादान्तम्। यदित ऊर्ध्वमनुक्रमिष्यते संहितायामित्येवं तद्वेदितव्यम्।

## षष्ठाध्याये चतुर्थः पादः

**अङ्गाधिकारः**
**६.४.१-७.४.९७**

अङ्गस्य दीर्घः ६.४.१-१८
अङ्गस्य शूठ् ६.४.१९-२१

**असिद्धवदधिकारः**
**६.४.२२-१७५**

असिद्धवदित्यधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्यते, आ षष्ठाध्यायपरिसमाप्तेः, असिद्धवत् तद्वेदितव्यम्। आभादिति विषय-निर्देशः। तस्मिन् समानाश्रये आभीये कर्तव्ये समानाश्रयमाभीयमसिद्धं भवति। व्याश्रयं तु न भवति। अस्याधिकारस्य विषयाः क्रमेण निर्दिश्यन्ते ---

१. नलोपः ६.४.२३-३३
२. शास उपधाया इकारादेशः ६.४.३४
३. शासः शा ६.४.३५
४. हन्तेर्जः ६.४.३६
५. अनुनासिकलोपः ६.४.३७-४०
६. अनुनासिकस्यात्त्वम् ६.४.४१-४५

**आर्धधातुक इत्यधिकारः**
**६.४.४६.६.४.७०**

आर्धधातुके इत्यधिकारोऽयं 'मयतेरिदन्यतरस्याम् ६.४.७०' इत्यन्तम्। प्रागेतस्माद्यदित ऊर्ध्वमनुक्रमिष्यते, 'आर्धधातुके' इत्येवं तद् वेदितव्यम्।

७. भ्रस्जो रमागमः ६.४.४७
८. अतो लोपः ६.४.४८

**क्ङित्यार्धधातुके कार्याणि**
**६.४.६३-७०**



इत्यार्धधातुकाधिकारः



**क्ङित्सार्वधातुकसम्बन्धीनि-**
**-अङ्गकार्याणि**

६.४.१०१ इत्यत आरभ्य ६.४.११९ इति यावद् विषयः क्ङिति सार्वधातुके भवन्ति ।



**४०. लिटि एत्वाभ्यासलोपप्रकरणम्**
**६.४.१२०-१२६**



**भाधिकारः**
**६.४.१२९-१७५**

भस्येत्ययमधिकार आऽध्यायपरि--समाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यते, भस्येत्येवं तद्वेदितव्यम् ।

## सप्तमाऽध्याये प्रथमः पादः

**अङ्गात्परस्य प्रत्ययस्यादेशाः**
**७.१.१-४९**

प्रकृतेरागमाः ७.१.५०-८३
असुगागमः ७.१.५०-५१

**स्वादिषु विभक्तिषु परतः कार्याणि**
**७.१.५०-९९**
**५१, ५८-६९ सूत्राणि वर्जयित्वा**

सुडागम आमि ७.१.५२
त्रेस्त्रयादेश आमि ७.१.५३
नुडागम आमि ७.१.५४-५७
नुमागमप्रकरणम् ७.१.५८-८३
दिव औत्त्वम् ७.१.८४
पथिमथ्यृभुक्षामङ्गकार्याणि ७.१.८५-८८
पुंसः। गोतः। सख्युः। ऋकारान्तानाम्। उशनस्पुरुदंसोऽनेहसाम्। क्रोष्टुः। चतुरनडुहोश्चाङ्गकार्याणि ७.१.८९-९९
ॠकारस्यादेशाः ७.१.१००-१०३

## सप्तमाध्याये द्वितीयः पादः

**सिचि वृद्धिः ७.२.१-८**

**इडागमप्रकरणम्**
७.२.८-७८ इति यावत्। तत्र ---
अनिट्प्रत्ययाः - ७.२.८-९।
अनिड्धातवः - ७.२.१०।
वेड्धातवः - ७.२.४३-४६।
इडागमनिषेधः - ७.२.११-३४।

आर्धधातुकप्रत्ययस्येडागमः ७.२ ३५-३६
इटो दीर्घः ७.२.३७-४०
पुनरार्धधातुकप्रत्ययस्येडागमः ७.२.४१-४३
क्त्वानिष्ठयोः, सनि, तासि च ७.२.४७-६०
थलीडागमः ७.२.६१-६६
क्वसौ-इडागमः ७.२.६७-६९
स्ये, सिचि, सनि इडागमः ७.२.७०-७५

**सार्वधातुके प्रत्ययेऽङ्गकार्याणि**
'रुदादिभ्यः सार्वधातुके ७.२.७६ इत्यत आरभ्य 'ईदासः ७.२.८३' इति यावत् सार्वधातुके प्रत्यये कार्याणि भवन्ति।

**विभक्तौ परतः प्रकृत्यादेशाः**
**७.२.८४-११३**

आकारादेशः ७.२.८४-९०

**मपर्यन्तस्येत्यधिकारः**
**७.२.९१-९८**

**विभक्तौ परतः प्रकृत्यादेशाः**
**७.२.९९-११३**

**वृद्धिप्रकरणम्**
**७.२.११४-७.३.३१**

**'ञ्णिति' परतो वृद्धिः**
**७.२.११५-७.३.३५ इति यावत्**

## सप्तमाध्याये तृतीयः पादः

**'ञ्णिति' 'किति' 'तद्धितेषु' वृद्धिः**
**७.२.११५-७.३.३१ इति यावत्**

**उत्तरपदस्येत्यधिकारः**
उत्तरपदस्येत्यधिकारो हनस्तो चिण्णलोः ७.३.३२ इत्यतः प्रागिति। प्रागेतस्मात् यदित ऊर्ध्वमनुक्रमिष्यते उत्तरपदस्येत्येवं तद् वेदितव्यम्।

**वाक्यस्वराः**

**'अनुदात्तं सर्वमपादादौ' इत्यधिकारः**
**८.१.१९-७४**

अनुदात्तमिति च, सर्वमिति च, अपादादाविति च, एतत्त्रयमधिकृतं वेदितव्य--मापादपरिसमाप्तेः। इत उत्तरं यद्वक्ष्यते अनुदात्तं सर्वमपादादावित्येवं तद् वेदितव्यम्। एतावता पदात्परस्यापादादौ वर्तमानस्य पदस्य सर्वमनुदात्तं भवति।

युष्मदस्मदोरादेशा अनुदात्तं च ८.१.२०-२६

पदात् इति निवृत्तम्
८.१.६८

अविद्यमानवत् ८.१.७२-७४

**अष्टमाध्याये द्वितीयः पादः**

**पूर्वत्रासिद्धत्वाधिकारः**
**८.२.१-८.४.६६**

पूर्वत्रासिद्धमित्यधिकार आष्टमा--ध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यते पूर्वत्रासिद्धमित्येवं तद्वेदितव्यम्। तत्र येयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पादोनो-ऽध्यायोऽसिद्धो भवति। इत उत्तरं चोत्तरोत्तरो योगः पूर्वत्र पूर्वत्रासिद्धो भवति। असिद्धवद् भवति, सिद्धकार्यं न करोतीत्यर्थः।

**पूर्वत्रासिद्धत्वस्य निषेधः**
८.२.२-३

**एकादेशस्वरः**
८.२.४-६

नलोपः ८.२.७-९
मतोरादेशाः ८.२.९-१७
लत्वम् ८.२.१८-२२
लोपप्रकरणम् ८.२.२३-२९
संयोगान्तस्य लोपः ८.२.२३
सकारस्य लोपः ८.२.२४-२९

**झलि पदान्ते कार्याणि**
**८.२.३०-३८ इति यावत्**

कुत्वम् ८.२.३०
ढत्वम् ८.२.३१
घत्वम् ८.२.३२-३३
धत्वम् ८.२.३४
थत्वम् ८.२.३५
षत्वम् ८.२.३६
भष्भावः ८.२.३७-३८
पदान्तजश्त्वम् ८.२.३९
भष्भावः ८.२.४०
षढोः कः ८.२.४१

**निष्ठातकारस्यादेशाः**
**८.२.४२-६१**

पदान्तस्य कुत्वम् ८.२.६२-६३
पदान्तस्य मकारस्य नकारादेशः ८.२.६४-६५
पदान्तस्य रुत्वम्, दत्वम् ८.२.६६-७५
र्वोर्दीर्घः ८.२.७६-७९
अदस आदेशाः ८.२..८०-८१

**वाक्यस्य टेः प्लुत उदात्त, इत्यधिकारः**
**८.२.८२-१०७**

## संहिताधिकारः तृतीयः

८.२.१०८-८.४.६६

संहितायामित्यधिकृतं वेदितव्यमाध्याय परिसमाप्तेः। इत उत्तरं यद्वक्ष्यते संहिताया-मित्येवं तद्वेदितव्यम्।

## अष्टमाध्याये तृतीयः पादः

### रुत्वप्रकरणम्

८.३.१-१२

ढलोपः ८.३.१३

रलोपः ८.३.१४

रेफस्य विसर्जनीयादेशः ८.३.१५-१६

रोयदिशः ८.३.१७.

वकारस्य, यकारस्यादेशाः ८.३.१८-२२

मकारस्य आदेशाः ८.३.२३-२७

कुक्, टुक्, धुट्, तुक्, ङमुट् आगमाः ८.३.२८-३२

उञो वः ८.३.३३

### विसर्जनीयस्यादेशाः

८.३.३४-५४

### अपदान्तस्य मूर्धन्यादेशाधिकारः

(षत्वं, ढत्वञ्च)

८.३.५५-११९

पदाधिकारो निवृत्तः। इतोऽपदान्तस्येति मूर्धन्यस्येति चैतदधिकृतं वेदितव्यमापाद-परिसमाप्तेः।

### 'इण्कोः' इत्यधिकारः

८.३.५७-११९

इण्कोरित्येतदधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यते इणः कवर्गाच्चेत्येव तद् वेदितव्यमापादान्तम्।

## अष्टमाध्याये चतुर्थः पादः

### णत्वप्रकरणम्

८.४.१.-३९

### हल्सन्धिः

८.४.४०-६५

श्चुत्वम् ८.४.४०

ष्टुत्वम् ८.४.४१-४४

अनुनासिकः ८.४.४५

यरो द्वित्त्वम् ८.४.४६-५२

अपदान्तजश्त्वम् ८.४.५३

अभ्यासस्य जश्त्वं चर्त्वम् ८.४.५४

अपदान्तचर्त्वम् ८.४.५५

पदान्तचर्त्वम् ८.४.५६

अप्रगृह्यस्यानुनासिकः ८.४.५७

अनुस्वारस्य परसवर्णः ८.४.५८-५९

लत्वम् ८.४.६०

पूर्वसवर्णः ८.४.६१-६२

शश्छत्वम् ८.४.६३

यमां लोपः ८.४.६४

झरो लोपः ८.४.६५

स्वरितः ८.२.६६-६७

विवृताकारस्य संवृताकारः ८.२.६८



# अकारादिक्रमेणाष्टाध्यायीविषयानुक्रमणी

व.

महर्षिपाणिनिप्रणीतः

# अष्टाध्यायीसूत्रपाठः

प्रकरणनिर्देशसमन्वितः

# अथ प्रत्याहारप्रकरणम्

श्रीहरिः

अष्टाध्यायी जगन्माता यस्य चित्तात्समुत्थिता।
वेदानामुपकाराय तस्मै पाणिनये नमः।। १।।

अष्टकं पाणिनेर्दिव्यं शब्दशास्त्रमलौकिकम्।
आकुमारं यशो यस्य तस्मै पाणिनये नमः।। २।।

शब्दरत्नाकरोद्भूतं शैवं रत्नचतुर्दशम्।
शास्त्रे येन समायोजि तस्मै पाणिनये नमः।। ३।।

ब्रह्माण्डारणिनिर्मन्थादुत्थितज्ञानवह्निना।
निर्ममे शब्दशास्त्रं यस्तस्मै पाणिनये नमः।। ४।।

व्याकृत्य दर्शितो येन त्रय्या वाचः परं पदम्।
सिद्धिसोपानभूतं यत् तस्मै पाणिनये नमः।। ५।।

शब्दब्रह्म समाराध्य कृतवान् यो विलक्षणम्।
सर्वाश्चर्यमयं शास्त्रं तस्मै पाणिनये नमः।। ६।।

यस्य भासावभासन्ते वैदिका लौकिकास्तथा।
शब्दा रूपं विवृत्येमे तस्मै पाणिनये नमः।। ७।।

वाचं कामदुघां कर्तुं दिव्यं शास्त्रमसीसृजत्।
भवं प्रसाद्य भक्त्या यस्तस्मै पाणिनये नमः।। ८।।

यः परं पदमन्वेष्टुं पदराशिं व्यबीभजत्।
मोक्षमार्गप्रकाशाय तस्मै पाणिनये नमः।। ९।।

यतो नावर्तते जीवः शब्दशास्त्रमुपासिता [१]।
तत्पदं दर्शितं येन तस्मै पाणिनये नमः।। १०।।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।। ११।।

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः।। १२।।

[१] 'आस उपवेशने' इत्यस्माद् धातोः तच्छीलाद्यर्थेषु कर्तरि तृन्। तेन 'न लोकाव्यय०'
इति षष्ठीनिषेधः।

अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः।। १३।।

सदाशिवसमारम्भां तथा पाणिनिमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्।। १४।।

उपासनीयं यत्नेन शास्त्रं व्याकरणं महत्।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम्।। १५।।

अथ शब्दानुशासनम्। केषां शब्दानाम्? लौकिकानां वैदिकानां च। लौकिका अनियतशब्दानुपूर्वीकाः, वैदिका नियतशब्दानुपूर्वीकाः। कथमनुशासनम्? प्रकृत्यादि-विभागकल्पनया सामान्यविशेषवता लक्षणेन।

अथ वर्णोपदेशः

# अथ वर्णमातृका

## स्वरवर्णाः

अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, ऌ, ए, ऐ, ओ, औ।

अं = अनुस्वारः अः = विसर्गः

## व्यञ्जनवर्णाः

| | प्रथमः | द्वितीयः | तृतीयः | चतुर्थः | पञ्चमः | वर्गः |
|---|---|---|---|---|---|---|
| स्पर्शाः | क | ख | ग | घ | ङ | कवर्गः – कु |
| स्पर्शाः | च | छ | ज | झ | ञ | चवर्गः – चु |
| स्पर्शाः | ट | ठ | ड | ढ | ण | टवर्गः – टु |
| स्पर्शाः | त | थ | द | ध | न | तवर्गः – तु |
| स्पर्शाः | प | फ | ब | भ | म | पवर्गः – पु |
| अन्तःस्थाः | य | र | ल | व | | |
| ऊष्माणः | श | ष | स | ह | | |

भगवतः पाणिनेस्तपःप्रभावेणैषा वर्णमातृकैव शिवस्य डमरुनिनादान्माहेश्वर-सूत्ररूपेणोद्गता।

## अथ माहेश्वराणि सूत्राणि

**१. अइउण् २.ऋऌक् ३. एओङ् ४. ऐऔच् ५. हयवरट् ६. लण् ७. ञमङणनम् ८. झभञ् ९. घढधष् १०. जबगडदश् ११. खफछठथचटतव्, १२. कपय् १३. शषसर् १४. हल् ।**

इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि । अत्र १, २, ३, ४, सूत्रेषु मातृकापाठस्य स्वरवर्णाः सन्ति । ५, ६, सूत्रयोः मातृकापाठस्यान्तःस्थवर्णाः सन्ति । ७ सूत्रे मातृकापाठस्य पञ्चमवर्णाः सन्ति । ८, ९, सूत्रयोः मातृकापाठस्य चतुर्थवर्णाः सन्ति । १० सूत्रे मातृकापाठस्य तृतीयवर्णाः सन्ति । ११, १२ सूत्रयोः मातृकापाठस्य प्रथमद्वितीयवर्णाः सन्ति । १३, १४, सूत्रयोः मातृकापाठस्योष्मवर्णाः सन्ति। एषां सूत्राणामन्त्या इतः। त एवानुबन्धाः। अनुबन्धाश्च प्रत्याहारार्थाः । प्रत्याहाराश्च त्रयश्चत्वारिंशत् ------

### अथ प्रत्याहाराः

अइउण् – अस्य णकारेणैकः प्रत्याहारः – अण् इति ।

ऋऌक् – अस्य ककारेण त्रयः प्रत्याहाराः – अक्, इक्, उक्, इति ।

एओङ् – अस्य ङकारेणैकः प्रत्याहारः – एङ्, इति ।

ऐऔच् – अस्य चकारेण चत्वारः प्रत्याहाराः – अच्, इच्, एच्, ऐच्, इति ।

हयवरट् – अस्य टकारेणैकः प्रत्याहारः – अट्, इति ।

लण् – अस्य णकारेण त्रयः प्रत्याहाराः – अण्, इण्, यण्, इति ।

ञमङणनम् – अस्य मकारेण त्रयः प्रत्याहाराः – अम्, ञम्, ङम्, इति ।

झभञ् – अस्य ञकारेणैकः प्रत्याहारः – यञ् इति ।

घढधष् – अस्य षकारेण द्वौ प्रत्याहारौ – भष्, झष्, इति ।

जबगडदश् – अस्य शकारेण षट् प्रत्याहाराः – अश्, हश्, वश्, जश्, झश्, बश्, इति ।

खफछठथचटतव् – अस्य वकारेणैकः प्रत्याहारः – छव्, इति ।

कपय् – अस्य यकारेण पञ्च प्रत्याहाराः – यय्, मय्, झय्, खय्, इति ।

शषसर् – अस्य रेफेण पञ्च प्रत्याहाराः – यर्, झर्, खर्, चर्, शर्, इति ।

हल् – अस्य लकारेण षट् प्रत्याहाराः – अल्, हल्, वल्, रल्, झल्, शल्, इति ।

एकस्मान् ङञणवटा / द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः ।

ज्ञेयौ चयौ चतुर्भ्यो / रः पञ्चभ्यः / शलौ षड्भ्यः । ।

वर्णोपदेशे हकारादिष्वकार उच्चारणार्थः। अनुबन्धाश्च 'अण्' इत्येवमादिकाः संज्ञाः प्रणेतुं तद्रूपप्रतिपादनायोच्चार्यन्ते। ततश्च परार्थमुपादीयमानत्वादप्राधान्यमनुभवन्ति। इतरे तु स्वार्थमुपादीयन्त इति तेषां प्राधान्यम्। तेन तेषामेवाजिति एषा संज्ञा भवति, नानुबन्धानाम्। आचार्यप्रवृत्तिरप्येवं ज्ञापयति। यदयम् 'उणादयो बहुलम्' 'ङमो ह्रस्वादचि ङमुण् नित्यम्' 'यरोऽनुनासिकेऽनुनासिको वा' इत्यादिषु णकारादिषु परतो यणादेशं न करोति। अतश्च प्रत्याहारेष्वितां न ग्रहणम्।

माहेश्वरसूत्रेष्वनुबन्धा आसञ्जिताः - अइउण्, ऋऌक्, इति। धातुष्वनुबन्धा आसञ्जिताः - डुकृञ्, टुनदि, ञिमिदा इति। आगमेष्वनुबन्धा आसञ्जिताः - इट्, सुट्, नुम्, नुक्, इति। प्रत्ययेष्वनुबन्धा आसञ्जिताः - ण्वुल्, तृच्, क्त्वा, क्तिन्, ष्यञ्, इति। गणेष्वनुबन्धा आसञ्जिता - नदट्, चोरट्, इति। एतेऽनुबन्धा एव पाणिनिशास्त्रं प्रयोजयन्ति। कुत्र भवेद् वृद्धिः, कुत्र गुणः, कुत्र च गुणवृद्धिनिषेधः, कुत्र सम्प्रसारणं, कुत्र नलोपः, कुत्र नुमागमः, कुत्रात्त्वं, कुत्रेत्त्वम्, इति सर्वं निर्दिशन्त्येतेऽनुबन्धा इति महदाश्चर्यकरम्। अयमेव वर्णोपदेशविधिर्भगवतः पाणिनेः। तादृशेन विधिनोपदेशः येन स्वयमेव स्यात् प्रवृत्तिः सूत्राणाम्। अत एवोक्तं भाष्ये - 'वृत्तिसमवायार्थ उपदेशः'। वृत्तिः शास्त्रप्रवृत्तिः, समवायो वर्णानामानुपूर्व्येण संनिवेशः। अनुबन्धाः, प्रत्याहाराः, प्रकरणानि च प्राणाः सन्त्यष्टाध्याय्याः। अत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्।

भगवता सर्वो लौकिको, वैदिकश्च शब्दराशिरेककालावच्छेदेन प्रत्यक्षीकृतो योगेबलेन। अत एव ते तत्रत्यलोपागमवर्णविकारान् महत्या सूक्ष्मेक्षिकया निरीक्ष्यैकैकं कार्यमेकैकस्मिन् प्रकरणे निबध्नन्ति। यथा - 'श्नान्नलोपः (६.४.२३)' इत्यारभ्यैकादशसूत्रैः सर्वो लौकिको वैदिकश्च नलोपस्तत्र विहितः। अतः 'श्नान्नलोपः (६.४.२३)' इत्यतः प्राक्, अथ च 'भञ्जेश्च चिणि (६.४.३३) इत उत्तरं न कोऽपि नलोपोऽष्टाध्याय्यां द्रष्टुं शक्यते। यत एकैकं कार्यमेकैकस्मिन् प्रकरणे निःशेषीभवति। एकैकस्य कार्यस्य कृत एकैकं प्रकरणमित्येव विधिर्वर्ततिऽष्टाध्याय्याः। प्रकरणेऽपि सूत्राण्यनुवृत्तिक्रमेण निबद्धाः सन्ति, येन सूत्रार्थावगतिः स्वयमेव जायते। इत्थञ्च न हि पाणिनिना शब्दाः प्रोक्ताः, किं तर्हि ? सूत्रम्।

अतः पाणिनीयशास्त्रमिदं न केवलं लौकिकवैदिकशब्दराशिं प्रकाशयति, अपितु तादृशं किमपि विज्ञानं प्रकटयति येन कस्या अपि भाषाया शब्दराशिर्व्याकर्तुं शक्यते। इदं न केवलं संस्कृतस्य व्याकरणमपितु स्वस्वभाषाव्याचिकीर्षूणां ज्ञानप्रदीपः।

इति प्रत्याहारप्रकरणम्।

# अथ पाणिन्यष्टाध्यायीसूत्रपाठः

## (प्रकरणनिर्देशसमन्वितः)

अवश्यध्यातव्यम् - सूत्रपाठेऽस्मिन् सूत्रात्प्राक् या संख्या लिखिता, सा अष्टाध्याय्याः सूत्रस्य क्रमं दर्शयति। सूत्रात् परं या संख्या लिखिता, सा सिद्धान्तकौमुद्यां तस्य सूत्रस्य क्रमाङ्कं दर्शयति। तया संख्यया तत्सूत्रं सिद्धान्तकौमुद्यां झटित्यन्वेष्टुं शक्यते।

### अथ प्रथमाध्याये प्रथमः पादः

वृद्धिसंज्ञा

१. वृद्धि-रादैच् १६।

गुणसंज्ञा

२. अदेङ् गुणः १७।

परिभाषा

३. इको गुणवृद्धी ३४।

गुणवृद्धिनिषेधः

४. न धातुलोप आर्धधातुके २६५६।

५. क्ङिति च २२१७।

६. दीधी-वेवी-टाम् २१९०।

संयोगसंज्ञा

७. हलोऽनन्तराः संयोगः ३०।

अनुनासिकसंज्ञा

८. मुख-नासिका-वचनोऽ-नुनासिकः ९।

सवर्णसंज्ञा

९. तुल्यास्य-प्रयत्नं सवर्णम् १०।

१०. नाज्झलौ १३।

प्रगृह्यसंज्ञा

११. ईदूदेद् द्विवचनं प्रगृह्यम् १००।

१२. अदसो मात् १०१।

१३. शे १०२।

१४. निपात एकाजनाङ् १०३।

१५. ओत् १०४।

१६. संबुद्धौ शाकल्यस्येता-वनार्षे १०५।

१७. उञः १०६।

१८. ऊँ १०७।

१९. ईदूतौ च सप्तम्यर्थे १०९।

घुसंज्ञा

२०. दाधाघ्वदाप् २३७३।

परिभाषा

२१. आद्यन्त-वदेकस्मिन् ३४८।

घसंज्ञा

२२. तरप्तमपौ घः २००३।

संख्यासंज्ञा

२३. बहु-गण-वतु-डति संख्या २५८।

षट्संज्ञा

२४. ष्णान्ता षट् ३६९।

२५. डति च २५९।

निष्ठासंज्ञा

२६. क्त-क्तवतू निष्ठा ३०१२।

सर्वनामसंज्ञा

२७. सर्वादीनि सर्वनामानि २१३।

२८. विभाषा दिक्समासे - बहुव्रीहौ २९२।

२९. न बहुव्रीहौ २२२।

३०. तृतीयासमासे २२३ ।
३१. द्वन्द्वे च २२४ ।
३२. विभाषा जसि २२५ ।
३३. प्रथम-चरम-तयाल्पार्ध-कतिपय नेमाश्च २२६ ।
३४. पूर्व-परावर-दक्षिणोत्तरा-परा-धराणि व्यवस्थाया-मसंज्ञायाम् २१८ ।
३५. स्व-मज्ञाति-धनाख्यायाम् २१९ ।
३६. अन्तरं बहिर्योगोप - संव्यानयो:२२० ।

अव्ययसंज्ञा

३७. स्वरादि-निपात-मव्ययम् ४४७ ।
३८. तद्धितश्चा-सर्वविभक्ति: ४४८ ।
३९. कृन्मेजन्त: ४४९ ।
४०. क्त्वा-तोसुन्कसुन: ४५० ।
४१. अव्ययीभावश्च ४५१ ।

सर्वनामस्थानसंज्ञा

४२. शि सर्वनामस्थानम् ३१३ ।
४३. सुडनपुंसकस्य २२९ ।

विभाषासंज्ञा

४४. न वेति विभाषा २४ ।

सम्प्रसारणसंज्ञा

४५. इग्यण: संप्रसारणम् ३२८ ।

परिभाषासूत्राणि

४६. आद्यन्तौ टकितौ ३६ ।
४७. मिदचोऽन्त्यात्पर: ३७ ।
४८. एच इग्घ्रस्वादेशे ३२३ ।
४९. षष्ठी स्थानेयोगा ३८ ।
५०. स्थानेऽन्तरतम: ३९ ।
५१. उरण् रपर: ७० ।
५२. अलोऽन्त्यस्य ४२ ।
५३. ङिच्च ४३ ।
५४. आदे: परस्य ४४ ।
५५. अनेकाल् शित् सर्वस्य ४५ ।

स्थानिवत्त्वातिदेश:

५६. स्थानिवदादेशोऽनल्विधौ ४९ ।
५७. अच: परस्मिन् पूर्वविधौ ५० ।
५८. न पदान्त-द्विर्वचन-वरे-यलोप-स्वर-सवर्णानुस्वार-दीर्घ-जश्चर्विधिषु ५१ ।
५९. द्विर्वचनेऽचि २२४३ ।

लोपसंज्ञा

६०. अदर्शनं लोप: ५३ ।

लुक्-श्लु-लुप्-संज्ञा:

६१. प्रत्ययस्य लुक्श्लुलुप: २६० ।

परिभाषासूत्रे

६२. प्रत्ययलोपे प्रत्ययलक्षणम् २६२ ।
६३. न लुमताऽङ्गस्य २६३ ।

टिसंज्ञा

६४. अचोऽन्त्यादि टि ७९ ।

उपधासंज्ञा

६५. अलोऽन्त्यात्पूर्व उपधा २४९ ।

परिभाषासूत्रे

६६. तस्मिन्निति निर्दिष्टे पूर्वस्य ४० ।
६७. तस्मादित्युत्तरस्य ४१ ।

ग्रहणकसूत्राणि

अर्थविशिष्टशब्दस्वरूपग्राहकसूत्रम्

६८. स्वं रूपं शब्दस्या-शब्दसंज्ञा २५ ।

सवर्णग्राहकसूत्रम्

६९. अणुदित्सवर्णस्य चाप्रत्ययः १४।

सवर्णग्राहकसूत्रम्

७०. तपरस्तत्कालस्य १५।

प्रत्याहारसंज्ञा

७१. आदिरन्त्येन सहेता २।

तदन्तग्राहकसूत्रम्

७२. येन विधिस्तदन्तस्य २६।

वृद्धसंज्ञा

७३. वृद्धिर्यस्याचामादिस्तद् वृद्धम् १३३५।

७४. त्यदादीनि च १३३६।

७५. एङ् प्राचां देशे १३३८।

प्रथमाध्याये द्वितीयः पादः

अतिदेशप्रकरणम्

१.२.१ सूत्रादारभ्य १.२.२६ इत्यन्तम् अतिदेशप्रकरणमस्ति। एतानि सूत्राणि धातुभ्यो विहितेषु केषुचित् प्रत्ययेषु कित्त्वम्, केषुचित् अकित्त्वम्, केषुचिच्च ङित्वमतिदिशन्ति।

ङित्त्वातिदेशः

१. गाङ्कुटादिभ्योऽञ्णिन्ङित् २४६१।

२. विज इट् २५३६।

३. विभाषोर्णोः २४४७।

४. सार्वधातुक-मपित् २२३४।

कित्त्वातिदेशः

५. असंयोगाल्लिट् कित् २२४२।

६. इन्धि-भवतिभ्यां च ३३९३।

७ मृड-मृद-गुध-कुष-क्लिश-वद-वसः क्त्वा ३३२३।

८. रुद-विद-मुष-ग्रहि-स्वपि-प्रच्छः संश्च २६०९।

९. इको झल् २६१२।

१०. हलन्ताच्च २६१३।

११. लिङ्-सिचा-वात्मनेपदेषु २३००।

१२. उश्च २३६८।

१३. वा गमः २७००।

१४. हनः सिच् २६९७।

१५. यमो गन्धने २६९८।

१६. विभाषोप-यमने २७३०।

१७. स्थाघ्वोरिच्च २३८९।

अकित्त्वातिदेशः

१८. न क्त्वा सेट् ३३२२।

१९. निष्ठा शीङ्-स्विदि-मिदि-क्ष्विदि-धृषः ३०५२।

२०. मृषस्तितिक्षायाम् ३०५५।

२१. उदुपधाद् भावादि-कर्मणो-रन्यतरस्याम् ३०५६।

२२. पूङः क्त्वा च ३०५१।

२३. नोपधात् थफान्ताद्वा ३३२४।

२४. वञ्चि-लुञ्च्यृतश्च ३३२५।

२५. तृषि-मृषि-कृशेः -काश्यपस्य ३३२६।

२६. रलो व्युपधाद्धलादेः संश्च २६१७।

ह्रस्व-दीर्घ-प्लुत-संज्ञाः

२७. ऊकालोऽज्झ्रस्व-दीर्घप्लुतः ४।

परिभाषासूत्रम्

२८. अचश्च ३५।

उदात्त-अनुदात्त-स्वरित-संज्ञाः

२९. उच्चै-रुदात्तः ५।

३०. नीचै-रनुदात्तः ६।

३१. समाहारः स्वरितः ७।

स्वरिते उदात्तांश-अनुदात्तांश-निर्णयः

३२. तस्यादित उदात्त-मर्धह्रस्वम् ८।

एकश्रुतिप्रकरणम्

३३. एकश्रुति दूरात्संबुद्धौ ३६६२।

३४. यज्ञकर्मण्यजपन्यूङ्ख-सामसु ३६६३।

३५. उच्चैस्तरां वा वषट्कारः ३६६४।

३६. विभाषा छन्दसि ३६६५।

३७. न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ३६६६।

३८. देवब्रह्मणो-रनुदात्तः ३६६७।

३९. स्वरितात् संहिताया-मनुदात्तानाम् ३६६८।

सन्नतरादेशः

४०. उदात्तस्वरितपरस्य सन्नतरः ३६६९।

अपृक्तसंज्ञा

४१. अपृक्त एकाल्प्रत्ययः२५१।

कर्मधारयसंज्ञा

४२. तत्पुरुषः समानाधिकरणः कर्मधारयः ७४५।

उपसर्जनसंज्ञा

४३. प्रथमानिर्दिष्टं समास उपसर्जनम् ६५३।

४४. एकविभक्ति चापूर्वनिपाते ६५५।

प्रातिपदिकसंज्ञा

४५. अर्थवदधातु-रप्रत्ययः प्रातिपदिकम् १७८।

४६. कृत्तद्धित-समासाश्च १७९।

ह्रस्वविधिः

४७. ह्रस्वो नपुंसके प्रातिपदिकस्य ३१८।

४८. गोस्त्रियो-रुपसर्जनस्य ६५६।

स्त्रीप्रत्ययस्य लुक्

४९. लुक्तद्धितलुकि १४०८।

गोण्यां इकारादेशः

५०. इद् गोण्याः १७०३।

लुपि युक्तवद्भावः

५१. लुपि युक्तवद् व्यक्ति-वचने १२९४।

५२. विशेषणानां चाजातेः १३००।

अशिष्यप्रकरणम्

५३. तदशिष्यं संज्ञाप्रमाणत्वात् १२९५।

५४. लुब्योगाप्रख्यानात् १२९६।

५५. योगप्रमाणे च तदभावेऽदर्शनं स्यात् १२९७।

५६. प्रधान-प्रत्ययार्थवचन-मर्थस्यान्य-प्रमाणत्वात् १२९८।

५७. कालोपसर्जने च तुल्यम् १२९९।

वचननिर्धारणम्

५८. जात्याख्याया-मेकस्मिन्बहुवचन-मन्यतरस्याम् ८१७।

५९. अस्मदो द्वयोश्च ८१८।

६०. फल्गुनी-प्रोष्ठपदानां-च नक्षत्रे ८१९।

६१. छन्दसि पुनर्वस्वोरेक-वचनम् ३३८७।

६२. विशाखयोश्च ३३८८।

६३. तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे - बहुवचनस्य द्विवचनं नित्यम् ८२० ।

एकशेषप्रकरणम्

६४. सरूपाणा-मेकशेष एकविभक्तौ १८८ ।

६५. वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ९३१ ।

६६. स्त्री पुंवच्च ९३२ ।

६७. पुमान् स्त्रिया ९३३ ।

६८. भ्रातृपुत्रौ स्वसृ-दुहितृभ्याम् ९३४ ।

६९. नपुंसक-मनपुंसके-नैकवच्चा-स्यान्यतरस्याम् ९३५ ।

७०. पिता मात्रा ९३६ ।

७१. श्वशुरः श्वश्र्वा ९३७ ।

७२. त्यदादीनि सर्वैर्नित्यम् ९३८ ।

७३. ग्राम्य-पशु-सङ्घेष्व-तरुणेषु स्त्री ९३९ ।

प्रथमाध्याये तृतीयः पादः

धातुसंज्ञा

१. भूवादयो धातवः १८ ।

इत्संज्ञाप्रकरणम्

२. उपदेशेऽजनुनासिक इत् ३ ।

३. हलन्त्यम् १ ।

४. न विभक्तौ तुस्माः १९० ।

५. आदिर्ञिटुडवः २२८९ ।

६. षः प्रत्ययस्य ४७४ ।

७. चुटू १८९ ।

८. लशक्वतद्धिते १९५ ।

इत्-लोप-विधिः

९. तस्य लोपः ६२ ।

परिभाषासूत्रम्

१०. यथासंख्य-मनुदेशः समानाम् १२८ ।

११. स्वरितेनाधिकारः ४६ ।

आत्मनेपदप्रकरणम्

१२. अनुदात्तङित आत्मनेपदम् २१५७ ।

१३. भावकर्मणोः २६७९ ।

१४. कर्तरि कर्मव्यतिहारे २६८० ।

१५. न गति-हिंसार्थेभ्यः २६८१ ।

१६. इतरेतरान्योऽन्योप-पदाच्च २६८२ ।

१७. नेर्विशः २६८३ ।

१८. परिव्यवेभ्यः क्रियः २६८४ ।

१९. विपराभ्यां जेः २६८५ ।

२०. आङो दोऽनास्यविहरणे २६८६ ।

२१. क्रीडोऽ-नुसंपरिभ्यश्च २६८७ ।

२२. समवप्र-विभ्यः स्थः २६८९ ।

२३. प्रकाशनस्थेयाख्ययोश्च २६९० ।

२४. उदोऽनूर्ध्वकर्मणि २६९१ ।

२५. उपान्मन्त्रकरणे २६९२ ।

२६. अकर्मकाच्च २६९३ ।

२७ उद्विभ्यां तपः २६९४ ।

२८. आङो यमहनः २६९५ ।

२९. समो गम्यृच्छिभ्याम् २६९९ ।

३०. निसमुप-विभ्यो ह्वः २७०३ ।

३१. स्पर्धायामाङः २७०४ ।

३२. गन्धना-वक्षेपण-सेवन-साहसिक्य-प्रतियत्न-प्रकथनोपयोगेषु कृञः २७०५।
३३. अधेः प्रसहने २७०६।
३४. वेः शब्दकर्मणः २७०७।
३५. अकर्मकाच्च २७०८।
३६. संमाननोत्सञ्जना-चार्यकरण-ज्ञान-भृति-विगणन-व्ययेषु नियः २७०९।
३७. कर्तृस्थे चाशरीरे कर्मणि २७१०।
३८. वृत्ति-सर्ग-तायनेषु क्रमः २७११।
३९. उपपराभ्याम् २७१२।
४०. आङ उद्गमने २७१३।
४१. वेः पादविहरणे २७१४।
४२. प्रोपाभ्यां समर्थाभ्याम् २७१५।
४३. अनुपसर्गाद्वा २७१६।
४४. अपह्नवे ज्ञः २७१७।
४५. अकर्मकाच्च २७१८।
४६. संप्रतिभ्या-मनाध्याने २७१९।
४७. भासनोप-संभाषा-ज्ञान-यत्न-विमत्युपमन्त्रणेषु वदः २७२०।
४८. व्यक्तवाचां समुच्चारणे २७२१।
४९. अनोरकर्मकात् २७२२।
५०. विभाषा विप्रलापे २७२३।
५१. अवाद् ग्रः २७२४।
५२. समः प्रतिज्ञाने २७२५।
५३. उदश्चरः सकर्मकात् २७२६।
५४. समस्तृतीयायुक्तात् २७२७।
५५. दाणश्च सा चेच्चतुर्थ्यर्थे २७२८।
५६. उपाद्यमः स्वकरणे २७२९।
५७. ज्ञा-श्रु-स्मृ-दृशां सनः २७३१।
५८. नानोर्ज्ञः २७३२।
५९. प्रत्याङ्भ्यां श्रुवः २७३३।
६०. शदेः शितः २३६२।
६१. म्रियतेर्लुङ्-लिङोश्च २५३८।
६२. पूर्ववत्सनः २७३४।
६३. आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य २२४०।
६४. प्रोपाभ्यां युजे-रयज्ञपात्रेषु २७३५।
६५. समः क्ष्णुवः २७३६।
६६. भुजोऽनवने २७३७।
६७. णेरणौ यत्कर्म णौ चेत्स - कर्ताऽनाध्याने २७३८।
६८. भीस्म्योर्हेतुभये २५९४।
६९. गृधि-वञ्च्योः प्रलम्भने २७३९।
७०. लियः संमानन-शालीनी-करणयोश्च २५९२।
७१. मिथ्योपपदात् कृञोऽभ्यासे २७४०।

उभयपदप्रकरणम्

७२. स्वरितञितः कर्त्रभिप्राये क्रियाफले २१५८।
७३. अपाद्वदः २७४१।
७४. णिचश्च २५६४।
७५. समुदाङ्भ्यो यमोऽग्रन्थे २७४२।
७६. अनुपसर्गाज्ज्ञः २७४३।
७७. विभाषोपपदेन प्रतीयमाने २७४४।

परस्मैपदप्रकरणम्

७८. शेषात्कर्तरि परस्मैपदम् २१५९।

७९. अनुपराभ्यां कृञः २७४५।
८०. अभिप्रत्यतिभ्यः क्षिपः २७४६।
८१. प्राद्वहः २७४७।
८२. परेर्मृषः २७४८।
८३. व्याङ्-परिभ्यो रमः २७४९।
८४. उपाच्च २७५०।
८५. विभाषाऽकर्मकात् २७५१।
८६. बुध-युध-नश-जनेङ्-प्रु-द्रु-स्रुभ्यो णेः २७५२।
८७. निगरण-चलनार्थेभ्यश्च २७५३।
८८. अणा-वकर्मकात् -चित्तवत्कर्तृकात् २७५४।
८९. न पादम्याङ्यमाङ्यस-परिमुह-रुचि-नृति-वद-वसः २७५५।
९०. वा क्यषः २६६९।
९१. द्युद्भ्यो लुङि २३४५।
९२. वृद्भ्यः स्यसनोः २३४७।
९३. लुटि च क्लृपः २३५१।

## प्रथमाध्याये चतुर्थः पादः

### एकसंज्ञाधिकारः

१. आकडारादेका संज्ञा २३२।

अधिकारोऽयम्। इत आरभ्य 'कडाराः कर्मधारये २.२.३८' इति सूत्रावधिं यावद् एकस्य एकैव संज्ञा भवतीति वेदितव्यम्।

### परिभाषासूत्रम्

२. विप्रतिषेधे परं कार्यम् १७५।

### नदीसंज्ञा

३. यूस्त्र्याख्यौ नदी २६६।
४. नेयङुवङ्स्थाना-वस्त्री ३०३।
५. वाऽऽमि ३०४।
६. ङिति ह्रस्वश्च २९६।

### घिसंज्ञा

७. शेषो घ्यसखि २४३।
८. पतिः समास एव २५७।
९. षष्ठीयुक्तश्छन्दसि वा ३३८९।

### लघुसंज्ञा

१०. ह्रस्वं लघु ३१।

### गुरुसंज्ञा

११. संयोगे गुरु ३२।
१२. दीर्घं च ३३।

### अङ्गसंज्ञा

१३. यस्मात्प्रत्ययविधिस्तदादि-प्रत्ययेऽङ्गम् १९९।

### पद-संज्ञा

१४. सुप्तिङन्तं पदम् २९।
१५. नः क्ये २६५९।
१६. सिति च १२५२।
१७. स्वादिष्वसर्वनामस्थाने २३०।

### भ-संज्ञा

१८. यचि भम् २३१।
१९. तसौ मत्वर्थे १८९६।
२०. अयस्मयादीनि छन्दसि ३३९०।

### एकवचन-द्विवचन-बहुवचनविधिः

२१. बहुषु बहुवचनम् १८७।
२२. द्व्येकयोर्द्विवचनैकवचने १८६।

### कारकसंज्ञाधिकारः

२३. कारके ५३४।

१.४.२३ सूत्रादारभ्य १.४.५५ इत्यन्तं कारकसंज्ञाधिकारो वर्तते। एभिः सूत्रैः कारकसंज्ञा विधीयन्ते।

### अपादानसंज्ञा

२४. ध्रुवमपायेऽपादानम् ५८६।

२५. भीत्रार्थानां भयहेतुः ५८८।

२६. पराजे-रसोढः ५८९।

२७. वारणार्थाना-मीप्सितः ५९०।

२८. अन्तर्धौ येनादर्शनमिच्छति ५९१।

२९. आख्यातोपयोगे ५९२।

३०. जनिकर्तुः प्रकृतिः ५९३।

३१. भुवः प्रभवः ५९४।

### सम्प्रदानसंज्ञा

३२. कर्मणा यमभिप्रैति स संप्रदानम् ५६९।

३३. रुच्यर्थानां प्रीयमाणः ५७१।

३४. श्लाघ-ह्नुङ्-स्था-शपां ज्ञीप्स्यमानः ५७२।

३५. धारे-रुत्तमर्णः ५७३।

३६. स्पृहे-रीप्सितः५७४ ।

३७. क्रुध-द्रुहेर्ष्या-ऽसूयार्थानां-यं प्रति कोपः ५७५।

३८. क्रुधद्रुहो-रुपसृष्टयोः कर्म ५७६।

३९. राधीक्ष्योर्यस्य विप्रश्नः ५७७।

४०. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ५७८।

४१. अनुप्रति-गृणश्च ५७९।

### करणसंज्ञा

४२. साधकतमं करणम् ५६०।

४३. दिवः कर्म च ५६२।

४४. परिक्रयणे संप्रदान-मन्यतरस्याम् ५८०।

### अधिकरणसंज्ञा

४५. आधारोऽधिकरणम् ६३२।

### कर्मसंज्ञा

४६. अधिशीङ्स्थाऽऽसां कर्म ५४२।

४७. अभिनिविशश्च ५४३।

४८. उपान्वध्याङ्वसः ५४४।

४९. कर्तुरीप्सिततमं कर्म ५३५।

५०. तथायुक्तं चानीप्सितम् ५३८।

५१. अकथितं च ५३९।

५२. गति-बुद्धि-प्रत्यवसानार्थ-शब्दकर्मा-कर्मकाणा-मणि कर्ता स णौ ५४०।

५३. हृक्रो-रन्यतरस्याम् ५४१।

### कर्तृसंज्ञा

५४. स्वतन्त्रः कर्ता ५५९।

५५. तत्प्रयोजको हेतुश्च २५७५।

### निपातसंज्ञाधिकारः

५६. प्राग्रीश्वरान्निपाताः १९। इत आरभ्य 'अधिरीश्वरे १.४.९७' इति सूत्रात् प्राङ् निपातसंज्ञाधिक्रियते।

५७. चादयोऽसत्त्वे २०।

५८. प्रादयः २१।

### उपसर्गसंज्ञा

५९. उपसर्गाः क्रियायोगे २२।

### गतिसंज्ञा

६०. गतिश्च २३।

६१. ऊर्यादिच्विडाचश्च ७६२।

६२. अनुकरणं चानितिपरं ७६३।

६३. आदरा-नादरयोः सदसती ७६४।

६४. भूषणेऽलम् ७६५।

६५. अन्त-रपरिग्रहे ७६६।
६६. कणेमनसी श्रद्धाप्रतीघाते ७६७।
६७. पुरोऽव्ययम् ७६८।
६८. अस्तं च ७६९।
६९. अच्छ गत्यर्थवदेषु ७७०।
७०. अदोऽनुपदेशे ७७१ ।
७१. तिरोन्तर्धौ ७७२।
७२. विभाषा कृञि ७७३।
७३. उपाजेऽन्वाजे ७७४।
७४. साक्षात्प्रभृतीनि च ७७५।
७५. अनत्याधान उरसिमनसी ७७६।
७६. मध्ये पदे निवचने च ७७७।
७७. नित्यं हस्ते पाणावुपयमने ७७८।
७८. प्राध्वं बन्धने ७७९।
७९. जीविकोपनिषदा-वौपम्ये ७८०।

गत्युपसर्गसंज्ञानियमः गत्युपसर्गप्रयोग-
-नियमो वा

८०. ते प्राग्धातोः २२३०।
८१. छन्दसि परेऽपि ३३९१।
८२. व्यवहिताश्च ३३९२।

कर्मप्रवचनीयसंज्ञाधिकारः

८३. कर्मप्रवचनीयाः ५४६।

इत आरभ्य 'विभाषा कृञि १.४.९८' इति सूत्रं यावत् कर्मप्रवचनीयसंज्ञाधिक्रियते।

८४. अनुर्लक्षणे ५४७।
८५. तृतीयार्थे ५४९।
८६. हीने ५५०।
८७. उपोऽधिके च ५५१।
८८. अपपरी वर्जने ५९६।
८९. आङ्मर्यादावचने ५९७।
९०. लक्षणेत्थंभूताख्यान-भाग-वीप्सासु प्रतिपर्यनवः ५५२।
९१. अभिरभागे ५५३।
९२. प्रतिः प्रतिनिधिप्रतिदानयोः ५९९।
९३. अधिपरी अनर्थकौ ५५४।
९४. सुः पूजायाम् ५५५।
९५. अतिरतिक्रमणे च ५५६।
९६. अपिः पदार्थ-संभावनाऽन्ववसर्ग-गर्हा-समुच्चयेषु ५५७।
९७. अधिरीश्वरे ६४४।
९८. विभाषा कृञि ६४६।

परस्मैपदसंज्ञा

९९. लः परस्मैपदम् २१५५।

आत्मनेपदसंज्ञा

१००. तङानावात्मनेपदम् २१५६।

प्रथममध्यमोत्तमसंज्ञाः

१०१. तिङस्त्रीणि त्रीणि प्रथम - मध्यमोत्तमाः २१६०।

एकवचन-द्विवचन-बहुवचन-संज्ञाः

१०२. तान्येकवचन-द्विवचन-बहुवचनान्येकशः २१६१।
१०३. सुपः १८५।

विभक्तिसंज्ञा

१०४. विभक्तिश्च १८४।

प्रथममध्यमोत्तमपुरुषविधिः

१०५. युष्मद्युपपदे समानाधिकरणे-स्थानिन्यपि मध्यमः २१६२।
१०६. प्रहासे च मन्योपपदे-मन्यते-रुत्तम एकवच्च २१६३।
१०७. अस्मद्युत्तमः २१६४।

१०८. शेषे प्रथमः २१६५।

संहितासंज्ञा

१०९. परः संनिकर्षः संहिता २८।

अवसानसंज्ञा

११०. विरामोऽवसानम् २७।

द्वितीयाध्याये प्रथमः पादः

समर्थपरिभाषा

१. समर्थः पदविधिः ६४७।

परिभाषेयम्। यः कश्चिदिह शास्त्रे पदविधिः श्रूयते स समर्थाश्रितो बोध्यः।

पराङ्गवद्भावातिदेशः

२. सुबा-मन्त्रिते पराङ्गवत् स्वरे ३६५६।

समासाधिकारः

३. प्राक्कडारात्समासः ६४८।

संज्ञाधिकारोऽयम्। 'कडाराः कर्मधारये २.२.३८' इति प्राक् समास इत्यधिक्रियते।

४. सह सुपा ६४९।

अव्ययीभावाधिकारः

५. अव्ययीभावः ६५१।

'अव्ययीभाव' इति संज्ञाधिकारोऽयम्। इत आरभ्य 'तत्पुरुषः २.१.२२' इत्यतः प्राक् अव्ययीभावसंज्ञाधिक्रियते।

६. अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्यया-संप्रति-शब्द-प्रादुर्भाव-पश्चाद्यथानुपूर्व्य-यौगपद्य-सादृश्य-संपत्ति-साकल्यान्त-वचनेषु ६५२।

७. यथाऽसादृश्ये ६६१।

८. यावदवधारणे ६६२।

९. सुप्रतिना मात्रार्थे ६६३।

१०. अक्ष-शलाका-संख्याः परिणा ६६४।

११. विभाषा ६६५।

१२. अपपरिबहिरञ्चवः पञ्चम्या ६६६।

१३. आङ् मर्यादाभिविध्योः ६६७।

१४. लक्षणे-नाभिप्रती-आभिमुख्ये ६६८।

१५. अनुर्यत्समया ६६९।

१६. यस्य चायामः ६७०।

१७. तिष्ठद्गुप्रभृतीनि च ६७१।

१८. पारे मध्ये षष्ठ्या वा ६७२।

१९. संख्या वंश्येन ६७३।

२०. नदीभिश्च ६७४।

२१. अन्यपदार्थे च संज्ञायाम् ६७५।

तत्पुरुषाधिकारः

२२. तत्पुरुषः ६८४।

संज्ञाधिकारोऽयम्। इत आरभ्य 'शेषो बहुव्रीहिः २.२.२३' इत्यतः प्राक् तत्पुरुष-संज्ञाधिक्रियते।

२३. द्विगुश्च ६८५।

२४. द्वितीया श्रितातीत-पतित-गतात्यस्त-प्राप्तापन्नैः ६८६।

२५. स्वयं क्तेन ६७८।

२६. खट्वा क्षेपे ६८८।

२७. सामि ६८९।

२८. कालाः ६९०।

२९. अत्यन्तसंयोगे च ६९१।

३०. तृतीया तत्कृतार्थेन-गुणवचनेन ६९२।

३१. पूर्वसदृश-समोनार्थ-कलह-निपुण-मिश्र-श्लक्ष्णैः ६९३।
३२. कर्तृकरणे कृता बहुलम् ६९४।
३३. कृत्यै-रधिकार्थवचने ६९५।
३४. अन्नेन व्यञ्जनम् ६९६।
३५. भक्ष्येण मिश्रीकरणम् ६९७।
३६. चतुर्थी तदर्थार्थ-बलि-हित-सुख-रक्षितैः ६९८।
३७. पञ्चमी भयेन ६९९।
३८. अपेतापोढ-मुक्त-पतिता--पत्रस्तै-रल्पशः ७००।
३९. स्तोकान्तिक-दूरार्थकृच्छ्राणि-क्तेन ७०१।
४०. सप्तमी शौण्डैः ७१७।
४१. सिद्ध-शुष्क-पक्व-बन्धैश्च ७१८।
४२. ध्वाङ्क्षेण क्षेपे ७१९।
४३. कृत्यैर्ऋणे ७२०।
४४. संज्ञायाम् ७२१।
४५. क्तेनाहो-रात्रावयवाः ७२२।
४६. तत्र ७२३।
४७. क्षेपे ७२४।
४८. पात्रे-समितादयश्च ७२५।
४९. पूर्वकालैक-सर्वजरत्पुराण-नव-केवलाः समानाधिकरणेन ७२६।
५०. दिक्संख्ये संज्ञायाम् ७२७।
५१. तद्धितार्थोत्तरपद-समाहारे च ७२८।
५२. संख्यापूर्वो द्विगुः ७३०।
५३. कुत्सितानि कुत्सनैः ७३२।
५४. पापाणके कुत्सितैः ७३३।
५५. उपमानानि सामान्यवचनैः ७३४।
५६. उपमितं व्याघ्रादिभिः-सामान्याप्रयोगे ७३५।
५७. विशेषणं विशेष्येण बहुलम् ७३६।
५८. पूर्वापर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यम-वीराश्च ७३७।
५९. श्रेण्यादयः कृतादिभिः ७३८।
६०. क्तेन नञ्विशिष्टेनानञ् ७३९।
६१. सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ७४०।
६२. वृन्दारक-नाग-कुञ्जरैः -पूज्यमानम् ७४१।
६३. कतर-कतमौ जातिपरिप्रश्ने ७४२।
६४. किं क्षेपे ७४३।
६५. पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्-वष्कयणी-प्रवक्तृ-श्रोत्रियाध्यापक-धूर्तैर्जातिः ७४४।
६६. प्रशंसावचनैश्च ७४७।
६७. युवा खलति-पलित-वलिन-जरतीभिः ७४८।
६८. कृत्य-तुल्याख्या अजात्या ७४९।
६९. वर्णो वर्णेन ७५०।
७०. कुमारः श्रमणादिभिः ७५२।
७१. चतुष्पादो गर्भिण्या ७५३।
७२. मयूरव्यंसकादयश्च ७५४।

द्वितीयाध्याये द्वितीयः पादः

१. पूर्वापराधरोत्तर-मेकदेशि-नैका-धिकरणे ७१२।
२. अर्धं नपुंसकम् ७१३।

३. द्वितीय-तृतीय-चतुर्थ-तुर्याण्यन्यतरस्याम् ७१४ ।
४. प्राप्तापन्ने च द्वितीयया ७१५ ।
५. कालाः परिमाणिना ७१६ ।
६. नञ् ७५६ ।
७. ईषदकृता ७५५ ।
८. षष्ठी ७०२ ।
९. याजकादिभिश्च ७०३ ।
१०. न निर्धारणे ७०४ ।
११. पूरण-गुण-सुहितार्थ-सदव्यय-तव्य-समानाधिकरणेन ७०५ ।
१२. क्तेन च पूजायाम् ७०६ ।
१३. अधिकरणवाचिना च ७०७ ।
१४. कर्मणि च ७०८ ।
१५. तृजकाभ्यां कर्तरि ७०९ ।
१६. कर्तरि च ७१० ।
१७. नित्यं क्रीडा-जीविकयोः ७११ ।
१८. कु-गतिप्रादयः ७६१ ।
१९. उपपद-मतिङ् ७८२ ।
२०. अमैवाव्ययेन ७८३ ।
२१. तृतीयाप्रभृतीन्यन्यतरस्याम् ७८४ ।
२२. क्त्वा च ७८५ ।

बहुव्रीहिसमासः

२३. शेषो बहुव्रीहिः ८२९ ।

इत आरभ्य 'चार्थे द्वन्द्वः २.२.२९' इत्यतः प्राक् बहुव्रीहिसंज्ञाधिक्रियते ।

२४. अनेकमन्यपदार्थे ८३० ।
२५. संख्ययाव्ययासन्ना-दूराधिक-संख्याः संख्येये ८४३ ।
२६. दिङ्नामान्यन्तराले ८४५ ।
२७. तत्र तेनेद-मिति सरूपे ८४६ ।
२८. तेन सहेति तुल्ययोगे ८४८ ।

द्वन्द्वसमासः

२९. चार्थे द्वन्द्वः ९०१ ।

पूर्वनिपात-परनिपातप्रकरणम्

२.२.३० सूत्रादारभ्य २.२.३८ इति सूत्रं यावत् पूर्वनिपात-परनिपात-प्रकरणं वर्तते ।

३०. उपसर्जनं पूर्वम् ६५४ ।
३१. राजदन्तादिषु परम् ९०२ ।
३२. द्वन्द्वे घि ९०३ ।
३३. अजाद्यदन्तम् ९०४ ।
३४. अल्पाच्तरम् ९०५ ।
३५. सप्तमी-विशेषणे बहुव्रीहौ ८९८ ।
३६. निष्ठा ८९९ ।
३७. वाहिताग्न्यादिषु ९०० ।
३८. कडाराः कर्मधारये ७५१ ।

## द्वितीयाध्याये तृतीयः पादः

अनभिहिताधिकारः

१. अनभिहिते ५३६ ।

अधिकारोऽयम् । इत आरभ्य 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः २.२.७३' इति सूत्रं यावदापादान्तम् अनभिहिते कर्मादौ विभक्तयो विधीयन्ते । अतोऽयं पादो विभक्तिपाद इत्यभिधीयते ।

द्वितीया विभक्तिः

२. कर्मणि द्वितीया ५३७ ।
३. तृतीया च होश्छन्दसि ३३९४ ।
४. अन्तरान्तरेण युक्ते ५४५ ।
५. कालाध्वनो-रत्यन्तसंयोगे ५५८ ।
६. अपवर्गे तृतीया ५६३ ।

७. सप्तमी-पञ्चम्यौ-कारकमध्ये ६४३।
८. कर्मप्रवचनीय-युक्ते-द्वितीया ५४८।
९. यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ६४५।
१०. पञ्चम्यपाङ्परिभि: ५९८।
११. प्रतिनिधि-प्रतिदाने च-यस्मात् ६००।
१२. गत्यर्थ-कर्मणि द्वितीया-चतुर्थ्यौ-चेष्टाया-मनध्वनि ५८५।

चतुर्थी विभक्ति:

१३. चतुर्थी संप्रदाने ५७०।
१४. क्रियार्थोपपदस्य च कर्मणि - स्थानिन: ५८१।
१५. तुमर्थाच्च भाववचनात् ५८२।
१६. नम: स्वस्ति-स्वाहा-स्वधालं-वषड्योगाच्च ५८३।
१७. मन्यकर्मण्यनादरे-विभाषाप्राणिषु ५८४।

तृतीया विभक्ति:

१८. कर्तृकरणयोस्तृतीया ५६१।
१९. सहयुक्तेऽप्रधाने ५६४।
२०. येनाङ्ग-विकार: ५६५।
२१. इत्थंभूतलक्षणे ५६६।
२२. संज्ञोऽन्यतरस्यां कर्मणि ५६७।
२३. हेतौ ५६८।
२४. अकर्तर्यृणे पञ्चमी ६०१।
२५. विभाषा गुणेऽस्त्रियाम् ६०२।
२६. षष्ठी हेतुप्रयोगे ६०७।
२७. सर्वनाम्नस्तृतीया च ६०८।

पञ्चमी विभक्ति:

२८. अपादाने पञ्चमी ५८७।
२९. अन्यारादितरर्ते-दिक्छब्दाञ्चू-त्तर-पदाजाहि-युक्ते ५९५।
३०. षष्ठ्यतसर्थप्रत्ययेन ६०९।
३१. एनपा द्वितीया ६१०।
३२. पृथग्विना-नानाभिस्तृतीयान्य - तरस्याम् ६०३।
३३. करणे च स्तोकाल्प-कृच्छ्र-कतिपयस्या-सत्त्व-वचनस्य ६०४।
३४. दूरान्तिकार्थै: षष्ठ्यन्यतरस्याम् ६११।
३५. दूरान्तिकार्थेभ्यो-द्वितीया च ६०५।

सप्तमी विभक्ति:

३६. सप्तम्यधिकरणे च ६३३।
३७. यस्य च भावेन-भावलक्षणम् ६३४।
३८. षष्ठी चानादरे ६३५।
३९. स्वामीश्वराधिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैश्च ६३६।
४०. आयुक्त-कुशलाभ्यां-चासेवायाम् ६३७।
४१. यतश्च निर्धारणम् ६३८।
४२. पञ्चमी विभक्ते ६३९।
४३. साधु-निपुणाभ्या-मर्चायां सप्तम्यप्रते: ६४०।
४४. प्रसितोत्सुकाभ्यां तृतीया च ६४१।

४५. नक्षत्रे च लुपि ६४२।

प्रथमा विभक्ति:

४६. प्रातिपदिकार्थ-लिङ्ग-परिमाण-वचनमात्रे प्रथमा ५३२।

४७. सम्बोधने च ५३३।

आमन्त्रितसंज्ञा

४८. सामन्त्रितम् ४११।

सम्बुद्धिसंज्ञा

४९. एकवचनं संबुद्धि: १९२।

षष्ठी विभक्ति:

५०. षष्ठी शेषे ६०६।

५१. ज्ञोऽविदर्थस्य करणे ६१२।

५२. अधीगर्थ-दयेशां कर्मणि ६१३।

५३. कृञ: प्रतियत्ने ६१४।

५४. रुजार्थानां भाववचनाना-मज्वरे: ६१५।

५५. आशिषि नाथ: ६१६।

५६. जासि-निप्रहण-नाट-क्राथ-पिषां हिंसायाम् ६१७।

५७. व्यवहृपणो: समर्थयो: ६१८।

५८. दिवस्तदर्थस्य ६१९।

५९. विभाषोपसर्गे ६२०।

६०. द्वितीया ब्राह्मणे ३३९५।

६१. प्रेष्यब्रुवोर्हविषो देवता-संप्रदाने ६२१।

६२. चतुर्थ्यर्थे बहुलं छन्दसि ३३९६।

६३. यजेश्च करणे ३३९७।

६४. कृत्वोऽर्थप्रयोगे - कालेऽधिकरणे ६२२।

६५. कर्तृकर्मणो: कृति ६२३।

६६. उभयप्राप्तौ कर्मणि ६२४।

६७. क्तस्य च वर्तमाने ६२५।

६८. अधिकरणवाचिनश्च ६२६।

६९. न लोकाव्यय-निष्ठा-खलर्थ-तृनाम् ६२७।

७०. अकेनोर्भविष्य-दाधमर्ण्ययो: ६२८।

७१. कृत्यानां कर्तरि वा ६२९।

७२. तुल्यार्थै-रतुलोपमाभ्यां तृतीयान्यतरस्याम् ६३०।

७३. चतुर्थी चाशिष्यायुष्य-मद्र-भद्र-कुशल-सुखार्थ-हितै: ६३१।

## द्वितीयाध्याये चतुर्थ: पाद:

द्विगुद्वन्द्वसमासयोर्वचननिर्णय:

इत आरभ्य '२.४.३१' इति सूत्रं यावत् समासानां लिङ्गवचननिर्धारणं क्रियते।

१. द्विगु-रेकवचनम् ७३१।

२. द्वन्द्वश्च प्राणि-तूर्य-सेनाङ्गानाम् ९०६।

३. अनुवादे चरणानाम् ९०७।

४. अध्वर्यु-क्रतु-रनपुंसकम् ९०८।

५. अध्ययनतो-ऽविप्रकृष्टा-ख्यानाम् ९०९।

६. जाति-रप्राणिनाम् ९१०।

७. विशिष्टलिङ्गो - नदीदेशोऽग्रामा: ९११।

८. क्षुद्रजन्तव: ९१२।

९. येषां च विरोध: - शाश्वतिक: ९१३।

१०. शूद्राणा-मनिरवसितानाम् ९१४।

११. गवाश्वप्रभृतीनि च ९१५ ।

१२. विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्यश्व-वडव-पूर्वापराधरोत्तराणाम् ९१६ ।

१३. विप्रतिषिद्धं चानधिकरण-वाचि ९१७ ।

१४. न दधिपय आदीनि ९१८ ।

१५. अधिकरणैतावत्त्वे च ९१९ ।

१६. विभाषा समीपे ९२० ।

द्विगुद्वन्द्वाव्ययीभावानां लिङ्गनिर्णयः

१७. स नपुंसकम् ८२१ ।

१८. अव्ययीभावश्च ६५९ ।

तत्पुरुषे नपुंसकाधिकारः

१९. तत्पुरुषोऽनञ्कर्मधारयः ८२२ ।

अधिकारोऽयमुत्तरसूत्रेषूपतिष्ठते । यदित ऊर्ध्वमनुक्रमिष्यते तत्र नञ्समासं, कर्मधारयं च वर्जयित्वाऽन्यस्तत्पुरुषो नपुंसकलिङ्गे भवतीत्येतदधिकृतं वेदितव्यम् ।

२०. संज्ञायां कन्थोशीनरेषु ८२३ ।

२१. उपज्ञोपक्रमं तदाद्या-चिख्यासायाम् ८२४ ।

२२. छाया बाहुल्ये ८२५ ।

२३. सभा राजाऽमनुष्यपूर्वा ८२६ ।

२४. अशाला च ८२७ ।

२५. विभाषा सेना-सुराच्छाया-शाला-निशानाम् ८२८ ।

द्वन्द्व-तत्पुरुषयोर्लिङ्गनिर्णयः

२६. परवल्लिङ्गं द्वन्द्व-तत्पुरुषयोः ८१२ ।

२७. पूर्ववदश्व-वडवौ ८१३ ।

२८. हेमन्तशिशिरा-वहोरात्रे चच्छन्दसि ३३९९ ।

२९. रात्राह्नाहाः पुंसि ८१४ ।

३०. अपथं नपुंसकम् ८१५ ।

३१. अर्धर्चाः पुंसि च ८१६ ।

अन्वादेशप्रकरणम् २.२.३४ इति यावत्

३२. इदमोऽन्वादेशेऽ-शनुदात्तस्तृतीयादौ ३५० ।

३३. एतदस्त्रतसोस्त्रतसौ-चानुदात्तौ १९६२ ।

३४. द्वितीयाटौस्स्वेनः ३५१ ।

आर्धधातुक इत्यधिकारः

अधिकारेऽस्मिन्नार्धधातुकप्रत्ययेषु परेषु धात्वादेशाः विधीयन्ते

३५. आर्धधातुके २४३२ ।

अधिकारोऽयं 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः २.४.५७' इति सूत्रात् प्रागवर्तते । यदित ऊर्ध्वमनुक्रमिष्यते तदार्धधातुके वेदितव्यम् ।

३६. अदो जग्धिर्ल्यप्ति किति ३०८० ।

३७. लुङ्सनोर्घस्लृ २४२७ ।

३८. घञपोश्च ३२३६ ।

३९. बहुलं छन्दसि ३३९८ ।

४०. लिट्यन्यतरस्याम् २४२४ ।

४१. वेञो वयिः २४११ ।

४२. हनो वध लिङि २४३३ ।

४३. लुङि च २४३४ ।

४४. आत्मनेपदेष्वन्यतरस्याम् २६९६ ।

४५. इणो गा लुङि २४५८।
४६. णौ गमिरबोधने २६०७।
४७. सनि च २६१५।
४८. इङश्च २६१६।
४९. गाङ् लिटि २४५९।
५०. विभाषा लुङ्लृङोः २४६०।
५१. णौ च संश्चङोः २५७९।
५२. अस्तेर्भूः २४७०।
५३. ब्रुवो वचिः २४५३।
५४. चक्षिङः ख्याञ् २४३६।
५५. वा लिटि २४३७।
५६. अजेर्व्यघञपोः २२९२।
५७. वा यौ ३२९२।

लुक्प्रकरणम् - २.४.५८-८४

५८. ण्यक्षत्रियार्षञितो यूनि - लुगणिञोः १२७६।
५९. पैलादिभ्यश्च १०८४।
६०. इञः प्राचाम् १०८५।
६१. न तौल्वलिभ्यः १०८६।
६२. तद्राजस्य बहुषु - तेनैवास्त्रियाम् ११९३।
६३. यस्कादिभ्यो गोत्रे ११४६।
६४. यञञोश्च ११०८।
६५. अत्रि-भृगु-कुत्स-वसिष्ठ - गोतमाङ्गिरोभ्यश्च ११४७।
६६. बह्वच इञः प्राच्यभरतेषु ११४८।
६७. न गोपवनादिभ्यः ११४९।
६८. तिक-कितवादिभ्यो द्वन्द्वे ११५०।
६९. उपकादिभ्योऽन्यतरस्या- मद्वन्द्वे ११५१।
७०. आगस्त्य-कौण्डिन्ययो-रगस्ति - कुण्डिनच् ११५२।
७१. सुपो धातुप्रातिपदिकयोः ६५०।
७२. अदिप्रभृतिभ्यः शपः २४२३।
७३. बहुलं छन्दसि ३४००।
७४. यङोऽचि च २६५०।
७५. जुहोत्यादिभ्यः श्लुः २४८९।
७६. बहुलं छन्दसि ३४०१।
७७. गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु २२२३।
७८. विभाषा घ्रा-धेट्- शाच्छासः २३७६।
७९. तनादिभ्यस्तथासोः २५४७।
८०. मन्त्रे घस-ह्वर-णश-वृ- दहाद्-वृच्-कृ-गमि- जनिभ्यो लेः ३४०२।
८१. आमः २२३८।
८२. अव्ययादाप्सुपः ४५२।
८३. नाव्ययीभावा-दतोऽम्त्व- पञ्चम्याः ६५७।
८४. तृतीयासप्तम्योर्बहुलम् ६५८।

लादेशाः

८५. लुटः प्रथमस्य डारौरसः २१८८।

## तृतीयाध्याये प्रथमः पादः

प्रत्ययाधिकारः

१. प्रत्ययः १८०।

इत आरभ्यापञ्चमाध्यायपरिसमाप्ते- -रधिकारोऽयम्। अत्र प्रत्ययशब्दः संज्ञात्वे- -नाधिक्रियते। इत ऊर्ध्वं येऽनुक्रमिष्यन्ते, प्रत्ययसंज्ञास्ते वेदितव्याः।

एतेषु त्रिष्वध्यायेषु धातोः, प्रातिपदिकाद्, ङ्यन्तादाबन्ताच्च प्रत्यया विधीयन्ते। अतस्त्रयोऽध्याया इमे प्रत्ययाध्याया इति कथ्यन्ते। अत्र विशेषाः -

अत्र ३.१.३२ इत्यन्तं सनादयो द्वादश प्रत्ययाः सन्ति। एते धातुप्रत्यया, इति कथ्यन्ते। ततः ३.३.९० इत्यन्तं विकरणप्रत्ययाः सन्ति। ततः ३.४.७६ इत्यन्तं लकारप्रत्ययाः कृत्प्रत्ययाश्च सन्ति। ततः 'लस्य ३.४.७७' इत्यारभ्य ३.४.११७ इत्यन्तं लाधिकारो वर्तते।

प्रत्ययस्य परत्वाधिकारः

२. परश्च १८१।

इत आरभ्यापञ्चमाध्यायपरिसमाप्तेरधिकारोऽयं योगे योग उपतिष्ठते। परश्च स भवति धातोर्वा प्रातिपदिकाद्वा, यः प्रत्ययसंज्ञः।

प्रत्ययस्याद्युदात्तत्वाधिकारः

३. आद्युदात्तश्च ३७०८।

अयमप्यधिकारः परिभाषा वा आ पञ्चमाध्यायपरिसमाप्तेः। आद्युदात्तश्च स भवति यः प्रत्ययसंज्ञः।

४. अनुदात्तौ सुप्पितौ ३७०९।

पूर्वस्यायमपवादः। सुपः, पितश्च प्रत्यया अनुदात्ता भवन्ति।

सनादयो धातुप्रत्ययाः

सन् प्रत्ययः

५. गुप्तिज्किद्भ्यः सन् २३९३।

६. मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य २३९४।

७. धातोः कर्मणः समानकर्तृकादिच्छायां वा २६०८।

क्यच् प्रत्ययः

८. सुप आत्मनः क्यच् २६५७।

काम्यच् प्रत्ययः

९. काम्यच्च २६६३।

१०. उपमानादाचारे २६६४।

क्यङ् प्रत्ययः

११. कर्तुः क्यङ् सलोपश्च २६६५।

१२. भृशादिभ्यो भुव्यच्वेर्लोपश्च - हलः २६६७।

क्यष् प्रत्ययः

१३. लोहितादिडाज्भ्यः क्यष् २६६८।

१४. कष्टाय क्रमणे २६७०।

१५. कर्मणो रोमन्थतपोभ्यां वर्तिचरोः २६७१।

१६. बाष्पोष्मभ्यामुद्वमने २६७२।

१७. शब्दवैरकलहाभ्रकण्वमेघेभ्यः - करणे २६७३।

१८. सुखादिभ्यः - कर्तृवेदनायाम् २६७४।

क्यच् प्रत्ययः

१९. नमोवरिवश्चित्रङः - क्यच् २६७५।

णिङ् प्रत्ययः

२०. पुच्छभाण्डचीवराण्णिङ् २६७६।

णिच् प्रत्ययः

२१. मुण्ड-मिश्र-श्लक्षण-लवण-व्रत-वस्त्र-हल-कल-कृत-तूस्तेभ्यो णिच् २६७७।

धात्वधिकारः (प्रथमः)

यङ् प्रत्ययः

२२. धातो-रेकाचो हलादेः - क्रियासमभिहारे यङ् २६२९।

अस्मात्सूत्राद् 'धातोः' इत्येकदेश--स्याधिकारः 'कुषिरजोः प्राचां श्यन् परस्मैपदं च ३.१.९०' इति सूत्रं यावद् वर्तते। अस्मिन् धात्वधिकारे सनादिधातुप्रत्यया, विकरण--प्रत्ययाश्च सन्ति।

२३. नित्यं कौटिल्ये गतौ २६३४।

२४. लुप-सद-चर-जप-जभ-दह-दश-गृभ्यो भाव-गर्हायाम् २६३५।

णिच् प्रत्ययः

२५. सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच् २५६३।

२६. हेतुमति च २५७६।

यक् प्रत्ययः

२७. कण्ड्वादिभ्यो यक् २६७८।

आयप्रत्ययः

२८. गुपू-धूप-विच्छि-पणि-पनिभ्य -आयः २३०३।

ईयङ् प्रत्ययः

२९. ऋतेरीयङ् २४२२।

णिङ् प्रत्ययः

३०. कमेर्णिङ् २३१०।

३१. आयादय आर्धधातुके वा २३०५।

धातुसंज्ञा

३२. सनाद्यन्ता धातवः २३०४।

'स्यतासी लृलुटोः' इत्यस्मात् सूत्रादा--रभ्य 'कुषिरजोः प्राचां श्यन् परस्मैपदं च ३.१.९०' इत्यन्तं विकरणप्रत्ययाः सन्ति।

स्य-तास्-प्रत्ययौ

३३. स्यतासी लृ-लुटोः २१८६।

सिप्प्रत्ययः

३४. सिब्बहुलं लेटि ३४२५।

आम्प्रत्ययः

३५. कास्प्रत्यया-दाममन्त्रे लिटि २३०६।

३६. इजादेश्च गुरुमतोऽनृच्छः २२३७।

३७. दयायासश्च २३२४।

३८. उष-विद-जागृभ्योऽन्य-तरस्याम् २३४१।

३९. भी-ह्री-भृ-हुवां श्लुवच्च २४९१।

४०. कृञ्चानुप्रयुज्यते लिटि २२३९।

४१. विदांकुर्वन्त्वित्यन्य-तरस्याम् २४६५।

४२. अभ्युत्सादयां-प्रजनयां-चिकयां-रमयामकः पावयांक्रियाद्-विदामक्रन्निति च्छन्दसि ३४०३।

च्लिप्रत्ययः

४३. च्लि लुङि २२२१।

सिच्प्रत्ययः

४४. च्लेः सिच् २२२२।

क्सप्रत्ययः

४५. शल इगुपधादनिटः क्सः २३३६।

४६. श्लिष आलिङ्गने २५१४।

४७. न दृशः २४०७।

चङ्प्रत्ययः

४८. णि-श्रि-द्रु-स्रुभ्यः -कर्तरि चङ् २३१२।

४९. विभाषा धेट्श्व्योः २३७५।

५०. गुपेश्छन्दसि ३४०४।

५१. नोनयति-ध्वनयत्येलयत्यर्द-यतिभ्यः ३४०५।

अङ्प्रत्ययः

५२. अस्यति-वक्ति-ख्यातिभ्योऽङ् २४३८।

५३. लिपि-सिचि-ह्वश्च २४१८।

५४. आत्मनेपदेष्वन्यतरस्याम् २४१९।

५५. पुषादि-द्युतादि-लृदितः परस्मैपदेषु २३४३।

५६. सर्ति-शास्त्यर्तिभ्यश्च २३८२।

५७. इरितो वा २२६९।

५८. जॄ-स्तम्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यश्च २२९१।

५९. कृ-मृ-दृ-रुहिभ्यश्छन्दसि ३४०६।

चिण्प्रत्ययः

६०. चिण्ते पदः २५१३।

६१. दीप-जन-बुध-पूरि-तायि-प्यायिभ्योऽन्यतरस्याम् २३२८।

६२. अचः कर्मकर्तरि २७६८।

६३. दुहश्च २७६९।

६४. न रुधः २७७०।

६५. तपोऽनुतापे च २७६०।

६६. चिण्भावकर्मणोः २७५८।

यक्प्रत्ययः

६७. सार्वधातुके यक् २७५६।

शप्प्रत्ययः

६८. कर्तरि शप् २१६७।

श्यन्प्रत्ययः

६९. दिवादिभ्यः श्यन् २५०५।

७०. वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषः २३२१।

७१. यसोऽनुपसर्गात् २५२१।

७२. संयसश्च २५२२।

श्नुप्रत्ययः

७३. स्वादिभ्यः श्नुः २५२३।

७४. श्रुवः शृ च २३८६।

७५. अक्षोऽन्यतरस्याम् २३३८।

७६. तनूकरणे तक्षः २३३९।

शप्रत्ययः

७७. तुदादिभ्यः शः २५३४।

श्नम्प्रत्ययः

७८. रुधादिभ्यः श्नम् २५४३।

उप्रत्ययः

७९. तनादिकृञ्भ्यः उः २४६६।

८०. धिन्वि-कृण्व्यो र च २३३२।

श्नाप्रत्ययः

८१. क्र्यादिभ्यः श्ना २५५४।

८२. स्तन्भु-स्तुन्भु-स्कन्भु-स्कुन्भु-स्कुञ्भ्यः श्नुश्च २५५५।

शानच्प्रत्ययः

८३. हलः श्नः शानज्झौ २५५७।

शायच्प्रत्ययः

८४. छन्दसि शायजपि ३४३२।

८५. व्यत्ययो बहुलम् ३४३३।

अङ्प्रत्ययः

८६. लिङ्याशिष्यङ् ३४३४।

कर्मवद्भावप्रकरणम्

८७. कर्मवत्कर्मणा तुल्यक्रियः २७६६।

८८. तपस्तपःकर्मकस्यैव २७७१।

८९. न दुह-स्नु-नमां-यक्चिणौ २७६७।

श्यन्प्रत्ययः

९०. कुषिरजोः प्राचां श्यन् - परस्मैपदं च २७७२।

धात्वधिकारः (द्वितीयः)

९१. धातोः २८२९।

इत आरभ्याधिकारोऽयं वेदितव्य आ तृतीयाध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनु--क्रमिष्यते, धातोरित्येवं तद् वेदितव्यम्।

उपपदसंज्ञा

९२. तत्रोपपदं सप्तमीस्थम् ७८१।

कृत्संज्ञा

९३. कृदतिङ् ३७४।

अस्मिन् द्वितीये धात्वधिकारे, इत आरभ्य ३.४.६६ इति यावत् कृत्प्रत्ययाः सन्ति। अनुवृत्त्यनुरोधेन लकारप्रत्यया अप्यत्रैव विहिताः।

इत्थञ्च द्विविधाः प्रत्ययाः सन्त्यस्मिन् द्वितीये धात्वधिकारे। कृत्प्रत्यया, लकार--प्रत्ययाश्च। ३.४.७७ सूत्रादारभ्य लकाराणां स्थाने विहितास्तिङ्प्रत्यया अप्यस्मिन्नेवाधिकारे वर्तन्ते। एते विवेकेन विवेच्याः। एतेषु तिङ्भिन्नानां प्रत्ययानां कृत्संज्ञा भवतीति वेदितव्यम्।

परिभाषासूत्रम्

९४. वाऽसरूपोऽस्त्रियाम् २८३०।

अस्मिन् द्वितीये धात्वधिकारेऽसमान-रूपोऽपवादप्रत्यय उत्सर्गस्य वा बाधको भवति स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वा।

कृत्यसंज्ञा

९५. कृत्याः २८३१।

इत आरभ्य 'ण्वुल्तृचौ ३.१.१३३' इत्यतः प्राक् ये षट् प्रत्यया अनुक्रमिष्यन्ते, कृत्यसंज्ञकास्ते वेदितव्याः।

तव्यत्-तव्य-अनीयर्-प्रत्ययाः

९६. तव्यत्तव्यानीयरः २८३४।

यत्प्रत्ययः

९७. अचो यत् २८४२।

९८. पोरदुपधात् २८४४।

९९. शकिसहोश्च २८४७।

१००. गद-मद-चर-यमश्चानुपसर्गे २८४८।

१०१. अवद्य-पण्य-वर्या गर्ह्य-पणितव्या-निरोधेषु २८४९।

१०२. वह्यं करणम् २८५०।

१०३. अर्यः स्वामिवैश्ययोः २८५१।

१०४. उपसर्या काल्या प्रजने २८५२।

१०५. अजर्यं संगतम् २८५३।

क्यप् प्रत्ययः

१०६. वदः सुपि क्यप् च २८५४।

१०७. भुवो भावे २८५५।

१०८. हनस्त च २८५६।

१०९. एति-स्तु-शास्वृ-दृ-जुषः - क्यप् २८५७।

११०. ऋदुपधाच्चा - क्लृपिचृतेः २८५९।

१११. ई च खनः २८६०।

११२. भृञोऽसंज्ञायाम् २८६१।

११३. मृजेर्विभाषा २८६२।

११४. राजसूय-सूर्य-मृषोद्य-रुच्य-कुप्य-कृष्ट-पच्याव्यथ्याः २८६५।

११५. भिद्योद्ध्यौ नदे २८६६ ।
११६. पुष्य-सिद्ध्यौ नक्षत्रे २८६७ ।
११७. विपूय-विनीय-जित्या-मुञ्ज-कल्क-हलिषु २८६८ ।
११८. प्रत्यपिभ्यां ग्रहेः २८६९ ।
११९. पदास्वैरि-बाह्यापक्षेषु च २८७० ।
१२०. विभाषा कृ-वृषोः २८७१ ।
१२१. युग्यं च पत्रे २८७३ ।
१२२. अमावस्य-दन्यतरस्याम् २८७४ ।
१२३. छन्दसि निष्टर्क्य-देवहूय-प्रणीयोन्नीयोच्छिष्य-मर्यस्तर्या-ध्वर्य-खन्य-खान्य-देवयज्या-पृच्छ्य-प्रतिषीव्य-ब्रह्मवाद्य-भाव्य-स्ताव्योप - चाय्यपृडानि ३४०७ ।

ण्यत् प्रत्ययः

१२४. ऋहलोर्ण्यत् २८७२ ।
१२५. ओरावश्यके २८८६ ।
१२६. आसु-यु-वपि-रपि-लपि-त्रपि-चमश्च २८८७ ।
१२७. आनाय्योऽनित्ये २८८८ ।
१२८. प्रणाय्योऽसंमतौ २८८९ ।
१२९. पाय्य-सांनाय्य-निकाय्य-धाय्या-मान-हविर्निवास-सामिधेनीषु २८९० ।
१३०. क्रतौ कुण्डपाय्य-संचाय्यौ २८९१ ।
१३१. अग्नौ परिचाय्योपचाय्य-समूह्याः २८९२ ।
१३२. चित्याग्निचित्ये च २८९३ ।

ण्वुल्-तृच् प्रत्ययौ

१३३. ण्वुल्तृचौ २८९५ ।

ल्यु-णिनि-अच् प्रत्ययाः

१३४. नन्दि-ग्रहि-पचादिभ्यो - ल्युणिन्यचः २८९६ ।

क-प्रत्ययः

१३५. इगुपध-ज्ञा-प्री-किरः कः २८९७ ।
१३६. आतश्चोपसर्गे २८९८ ।

श-प्रत्ययः

१३७. पा-घ्रा-ध्मा-धेट्-दृशः शः २८९९ ।
१३८. अनुपसर्गाल्लिम्प-विन्द-धारि-पारि-वेद्युदेजि-चेति-साति-साहिभ्यश्च २९०० ।
१३९. ददाति-दधात्योर्विभाषा २९०१ ।

ण-प्रत्ययः

१४०. ज्वलिति-कसन्तेभ्यो णः २९०२ ।
१४१. श्याद् व्यधास्रु-संस्रवती-णवसा-वहृ-लिह-श्लिष-श्वसश्च २९०३ ।
१४२. दुन्यो-रनुपसर्गे २९०४ ।
१४३. विभाषा ग्रहः २९०५ ।

क-प्रत्ययः

१४४. गेहे कः २९०६ ।

ष्वुन् प्रत्ययः

१४५. शिल्पिनि ष्वुन् २९०७ ।

थकन् प्रत्ययः

१४६. गस्थकन् २९०८ ।

ण्युट् प्रत्ययः

१४७. ण्युट् च २९०९ ।

१४८. हश्च व्रीहि-कालयोः २९१० ।

वुन् प्रत्ययः

१४९. प्रु-सृल्वः समभिहारे वुन् २९११ ।

१५०. आशिषि च २९१२ ।

## तृतीयाध्याये द्वितीयः पादः

अण् प्रत्ययः

१. कर्मण्यण् २९१३ ।

२. ह्वावामश्च २९१४ ।

क-प्रत्ययः

३. आतोऽनुपसर्गे कः २९१५ ।

४. सुपि स्थः २९१६ ।

५. तुन्दशोकयोः परिमृजापनुदोः २९१९ ।

६. प्रे दाज्ञः २९२० ।

७. समि ख्यः २९२१ ।

ट-प्रत्ययः

८. गापोष्टक् २९२२ ।

अच् प्रत्ययः

९. हरते-रनुद्यमनेऽच् २९२३ ।

१०. वयसि च २९२४ ।

११. आङि ताच्छील्ये २९२५ ।

१२. अर्हः २९२६ ।

१३. स्तम्ब-कर्णयो रमिजपोः २९२७ ।

१४. शमि धातोः संज्ञायाम् २९२८ ।

१५. अधिकरणे शेतेः २९२९ ।

ट-प्रत्ययः

१६. चरेष्टः २९३० ।

१७. भिक्षा-सेना-दायेषु च २९३१ ।

१८. पुरोग्रतोऽग्रेषु सर्तेः २९३२ ।

१९. पूर्वे कर्तरि २९३३ ।

२०. कृञो हेतु-ताच्छील्या-नुलोम्येषु २९३४ ।

२१. दिवा-विभा-निशा-प्रभा-भास्करान्तानन्तादि-बहु-नान्दी-किं-लिपि-लिबि-बलि-भक्ति-कर्तृ-चित्र-क्षेत्र-संख्या-जङ्घा-बाह्व-हर्यत्तद्-धनु-रुरुःषु २९३५ ।

२२. कर्मणि भृतौ २९३६ ।

२३. न शब्द-श्लोक-कलह-गाथा-वैर-चाटु-सूत्र-मन्त्रपदेषु २९३७ ।

इन् प्रत्ययः

२४. स्तम्ब-शकृतोरिन् २९३८ ।

२५. हरतेर्दृति-नाथयोः पशौ २९३९ ।

२६. फलेग्रहि-रात्मंभरिश्च २९४० ।

२७. छन्दसि वन-सन-रक्षि-मथाम् ३४०८ ।

खश् प्रत्ययः

२८. एजेः खश् २९४१ ।

२९. नासिकास्तनयो-र्ध्माधेटोः २९४४ ।

३०. नाडी-मुष्ट्योश्च २९४५ ।

३१. उदि कूले रुजिवहोः २९४६ ।

३२. वहाभ्रे लिहः २९४७ ।

३३. परिमाणे पचः २९४८ ।

३४. मितनखे च २९४९ ।

३५. विध्वरुषोस्तुदः २९५० ।

३६. असूर्य-ललाटयोर्दृशि-
तपोः २९५१।
३७. उग्रंपश्येरंमद-
पाणिन्धमाश्च २९५२।

खच् प्रत्ययः

३८. प्रियवशे वदः खच् २९५३।
३९. द्विषत्परयोस्तापेः २९५४।
४०. वाचि यमो व्रते २९५६।
४१. पूःसर्वयोर्दारिसहोः २९५८।
४२. सर्वकूलाभ्र-करीषेषु कषः २९५९।
४३. मेघर्तिभयेषु कृञः २९६०।
४४. क्षेमप्रियमद्रेऽण्च २९६१।
४५. आशिते भुवः -
करणभावयोः २९६२।
४६. संज्ञायां भृ-तॄ-वृ-जि-
धारि-सहि-तपि-दमः २९६३।
४७. गमश्च २९६४।

ड-प्रत्ययः

४८. अन्तात्यन्ताध्व-दूर-पार-सर्वान्तेषु
डः २९६५।
४९. आशिषि हनः २९६६।
५०. अपे क्लेशतमसोः २९६७।

णिनि-प्रत्ययः

५१. कुमारशीर्षयोर्णिनिः २९६८।

टक् प्रत्ययः

५२. लक्षणे जायापत्योष्टक् २९६९।
५३. अमनुष्यकर्तृके च २९७०।
५४. शक्तौ हस्तिकपाटयोः २९७१।
५५. पाणिघताडघौ शिल्पिनि २९७२।

ख्युन् प्रत्ययः

५६. आढ्य-सुभग-स्थूल-पलित-
नग्नान्ध-प्रियेषु च्व्यर्थेष्वच्वौ
कृञः करणे ख्युन् २९७३।

खिष्णुच्-खुकञ्-प्रत्ययौ

५७. कर्तरि भुवः -
खिष्णुच्खुकञौ २९७४।

क्विन् प्रत्ययः

५८. स्पृशोऽनुदके क्विन् ४३२।
५९. ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चु -
युजिक्रुञ्चां च ३७३।

कञ् प्रत्ययः

६०. त्यदादिषु दृशोऽनालोचने
कञ्च ४२९।

क्विप् प्रत्ययः

६१. सत्सू-द्विष-द्रुह-दुह-युज-विद-
भिदच्छिद-जि-नी-राजा-
मुपसर्गेऽपि क्विप् २९७५।

ण्वि-प्रत्ययः

६२. भजो ण्विः २९७६।
६३. छन्दसि सहः ३४०९।
६४. वहश्च ३४१०।

ञ्युट् प्रत्ययः

६५. कव्य-पुरीष-पुरीष्येषु -
ञ्युट् ३४११।
६६. हव्येऽनन्तःपादम् ३४१२।

विट् प्रत्ययः

६७. जन-सन-खन-क्रम-गमो
विट् ३४१३।

६८. अदोऽनन्ने २९७७।

६९. क्रव्ये च २९७८।

कप्-प्रत्ययः

७०. दुहः कब्घश्च २९७९।

ण्विन् प्रत्ययः

७१. मन्त्रे श्वेतवहोक्थशस्पुरोडाशो - ण्विन् ३४१४।

७२. अवे यजः ३४१५।

विच् प्रत्ययः

७३. विजुपे छन्दसि ३४१७

मनिन्-क्वनिप्-वनिप्-विच् प्रत्ययाः

७४. आतो मनिन्क्वनिब्वनि-पश्च ३४१८।

७५. अन्येभ्योऽपि दृश्यन्ते २९८०।

क्विप् प्रत्ययः

७६. क्विप्च २९८३।

क-प्रत्ययः

७७. स्थः क च २९८७।

णिनि-प्रत्ययः

७८. सुप्यजातौ - णिनिस्ताच्छील्ये २९८८।

७९. कर्तर्युपमाने २९८९।

८०. व्रते २९९०।

८१. बहुलमाभीक्ष्ण्ये २९९१।

८२. मनः २९९२।

खश्-प्रत्ययः

८३. आत्ममाने खश्च २९९३।

भूताधिकारः

८४. भूते २९९५।

भूत इत्यधिकार इत आरभ्य 'वर्तमाने लट् ३.२.१२२' इत्यतः प्राक् वर्तते। यदित ऊर्ध्वमनुक्रमिष्यते भूत एव तदिति वेदितव्यम्। धात्वधिकाराच्च धात्वर्थे भूत इति विज्ञायते।

णिनि-प्रत्ययः

८५. करणे यजः २९९६।

८६. कर्मणि हनः २९९७।

क्विप्-प्रत्ययः

८७. ब्रह्म-भ्रूण-वृत्रेषु क्विप् २९९८।

८८. बहुलं छन्दसि ३४१९।

८९. सुकर्म-पाप-मन्त्र-पुण्येषु कृञः २९९९।

९०. सोमे सुञः ३०००।

९१. अग्नौ चेः ३००१।

९२. कर्मण्यग्न्याख्यायाम् ३००२।

इनि प्रत्ययः

९३. कर्मणीनि वि-क्रियः ३००३।

क्वनिप् प्रत्ययः

९४. दृशेः क्वनिप् ३००४।

९५. राजनि युधि कृञः ३००५।

९६. सहे च ३००६।

ड-प्रत्ययः

९७. सप्तम्यां जनेर्डः ३००७।

९८. पञ्चम्यामजातौ ३००८।

९९. उपसर्गे च संज्ञायाम् ३००९।

१००. अनौ कर्मणि ३०१०।

१०१. अन्येष्वपि दृश्यते ३०११।

क्त-क्तवतु-प्रत्ययौ

१०२. निष्ठा ३०१२।

ङ्वनिप् प्रत्ययः

१०३. सुयजोर्ङ्वनिप् ३०९१।

अतृन् प्रत्ययः

१०४. जीर्यतेरतृन् ३०९२।

लिट् प्रत्ययः (लकारप्रत्ययः)

१०५. छन्दसि लिट् ३०९३।

कानच् प्रत्ययः

१०६. लिटः कानज्वा ३०९४।

क्वसु-प्रत्ययः

१०७. क्वसुश्च ३०९५।

१०८. भाषायां सद-वस-श्रुवः ३०९७।

१०९. उपेयिवा-ननाश्वा-ननूचानश्च ३०९८।

लुङ् प्रत्ययः (लकारप्रत्ययः)

११०. लुङ् २२१८।

लङ् प्रत्ययः (लकारप्रत्ययः)

१११. अनद्यतने लङ् २२०५।

लृट् प्रत्ययः (लकारप्रत्ययः)

११२. अभिज्ञावचने लृट् २७७३।

११३. न यदि २७७४।

११४. विभाषा साकाङ्क्षे २७७५।

लिट् प्रत्ययः (लकारप्रत्ययः)

११५. परोक्षे लिट् २१७१।

लङ् प्रत्ययः (लकारप्रत्ययः)

११६. हशश्वतोर्लङ् च २७७६।

११७. प्रश्ने चासन्नकाले २७७७।

लट् प्रत्ययः (लकारप्रत्ययः)

११८. लट् स्मे २७७८।

११९. अपरोक्षे च २७७९।

१२०. ननौ पृष्टप्रतिवचने २७८०।

१२१. नन्वोर्विभाषा २७८१।

लुङ् प्रत्ययः (लकारप्रत्ययः)

१२२. पुरि लुङ् चास्मे २७८२।

वर्तमानाधिकारः

लट् प्रत्ययः (लकारप्रत्ययः)

१२३. वर्तमाने लट् २१५१।

आरब्धोऽपरिसमाप्तश्च वर्तमानः। तस्मिन् वर्तमानेऽर्थे वर्तमानाद् धातोर्लट् प्रत्ययो भवति। अस्य सूत्रस्यैकदेशो 'वर्तमाने' इत्यधिक्रियते। इत आरभ्य 'उणादयो बहुलम् ३.३.१' इत्यन्तं प्रत्यया वर्तमानेऽर्थे भवन्तीति वेदितव्यम्।

शतृ-शानच्-प्रत्ययौ

१२४. लटः शतृ-शानचा-वप्रथमा-समानाधिकरणे ३१००।

१२५. सम्बोधने च ३१०२।

१२६. लक्षणहेत्वोः क्रियायाः ३१०३।

सत्-संज्ञा

१२७. तौ सत् ३१०६।

शानन् प्रत्ययः

१२८. पूङ्यजोः शानन् ३१०८।

चानश् प्रत्ययः

१२९. ताच्छील्य-वयोवचन-शक्तिषु - चानश् ३१०९।

शतृ-प्रत्ययः

१३०. इङ्धार्योः शत्र-कृच्छ्रिणि ३११०।

१३१. द्विषोऽमित्रे ३१११।

१३२. सुञो यज्ञसंयोगे ३११२।

१३३. अर्हः प्रशंसायाम् ३११३।

ताच्छील्याद्यर्थाधिकारः

१३४. आ क्वेस्तच्छील-तद्धर्म-तत्साधु-कारिषु ३११४ ।

"भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् ३.२.१७७' इति क्विपं वक्ष्यति। आ एतस्मात् क्विप्संशब्दाद्य इत ऊर्ध्वमनुक्रमिष्यन्ते तच्छीलादिषु कर्तृषु ते वेदितव्याः। अभिविधौ चायमाङ्। तेन क्विपोऽप्ययमर्थीनिर्देशः। तदिति धात्वर्थः।

तृन् प्रत्ययः

१३५. तृन् ३११५ ।

इष्णुच् प्रत्ययः

१३६. अलंकृञ्-निराकृञ्-प्रजनोत्पचोत्पतोन्मद-रुच्यपत्रप-वृतु-वृधु-सह-चर इष्णुच् ३११६ ।

१३७. णेश्छन्दसि ३११७ ।

१३८. भुवश्च ३११८ ।

ग्स्नु प्रत्ययः

१३९. ग्लाजिस्थश्च ग्स्नुः ३११९ ।

क्नु प्रत्ययः

१४०. त्रसि-गृधि-धृषि-क्षिपेः - क्नुः ३१२० ।

घिनुण् प्रत्ययः

१४१. शमित्यष्टाभ्यो घिनुण् ३१२१ ।

१४२. संपृचानुरुधाङ्यमाङ्यस-परिसृ-संसृज-परिदेवि-संज्वर-परिक्षिप-परिरट-परिवद-परिदह-परिमुह-दुष-द्विष-द्रुह-दुह-युजाक्रीड-विविच-त्यज-रज-भजाति-चरापचरा-मुषाभ्याहनश्च ३१२२ ।

१४३. वौ कष-लस-कत्थ-स्रम्भः ३१२३ ।

१४४. अपे च लषः ३१२४ ।

१४५. प्रे लप-सृ-द्रु-मथ-वद-वसः ३१२५ ।

वुञ् प्रत्ययः

१४६. निन्द-हिंस-क्लिश-खाद-विनाश-परिक्षिप-परिरट-परिवादि-व्याभाषासूञो वुञ् ३१२६ ।

१४७. देविक्रुशोश्चोपसर्गे ३१२७ ।

युच् प्रत्ययः

१४८. चलन-शब्दार्थाद-कर्मकाद्युच् ३१२८ ।

१४९. अनुदात्तेतश्च हलादेः ३१२९ ।

१५०. जु-चङ्क्रम्य-दन्द्रम्य-सृ-गृधि-ज्वल-शुच-लष-पत-पदः ३१३० ।

१५१. क्रुध-मण्डार्थेभ्यश्च ३१३१ ।

१५२. न यः ३१३२ ।

१५३. सूद-दीप-दीक्षश्च ।

उकञ् प्रत्ययः

१५४. लष-पत-पद-स्था-भू-वृष-हन-कम-गम-शॄभ्य उकञ् ३१३४ ।

षाकन् प्रत्ययः

१५५. जल्प-भिक्ष-कुट्ट-लुण्ट-वृङः षाकन् ३१३५ ।

इनि प्रत्ययः

१५६. प्रजोरिनिः ३१३६ ।

१५७. जि-दृ-क्षि-विश्रीण्वमा-व्यथाभ्यम-परिभू-प्रसूभ्यश्च ३१३७ ।

आलुच् प्रत्ययः

१५८. स्पृहि-गृहि-पति-दयि-निद्रा-तन्द्रा-श्रद्धाभ्य आलुच् ३१३८।

रु प्रत्ययः

१५९. दा-धेट्-सि-शद-सदो रुः ३१३९।

क्मरच् प्रत्ययः

१६०. सृ-घस्यदः क्मरच् ३१४०।

घुरच् प्रत्ययः

१६१. भञ्ज-भास-मिदो घुरच् ३१४१।

कुरच् प्रत्ययः

१६२. विदि-भिदिच्छिदेः कुरच् ३१४२।

क्वरप् प्रत्ययः

१६३. इण्-नश्जि-सर्तिभ्यः - क्वरप् ३१४३।

१६४. गत्वरश्च ३१४४।

ऊक-प्रत्ययः

१६५. जागरूकः ३१४५।

१६६. यजजपदशां यङः ३१४६।

र-प्रत्ययः

१६७. नमि-कम्पि-स्म्यजस-कम-हिंस - दीपो रः ३१४७।

उ-प्रत्ययः

१६८. सनाशंसभिक्ष उः ३१४८।

१६९. विन्दुरिच्छुः ३१४९।

१७०. क्याच्छन्दसि ३१५०।

कि-किन्-प्रत्ययौ

१७१. आदृ-गम-हन-जनः किकिनौ - लिट् च ३१५१।

नजिङ् प्रत्ययः

१७२. स्वपितृषोर्नजिङ् ३१५२।

आरु-प्रत्ययः

१७३. शॄवन्द्योरारुः ३१५३।

क्रुक्-लुकन्-प्रत्ययौ

१७४. भियः क्रुक्लुकनौ ३१५४।

वरच् प्रत्ययः

१७५. स्थेश-भास-पिस-कसो वरच् ३१५५।

१७६. यश्च यङः ३१५६।

क्विप् प्रत्ययः

१७७. भ्राज-भास-धुर्वि-द्युतोर्जि-पॄ-जु- ग्रावस्तुवः क्विप् ३१५७।

१७८. अन्येभ्योऽपि दृश्यते ३१५८।

आ क्वेस्तच्छील-तद्धर्म-तत्साधुकारिषु इत्यधिकार इतो निवृत्तः।

१७९. भुवः संज्ञान्तरयोः ३१५९।

डु-प्रत्ययः

१८०. विप्रसंभ्यो ड्वसंज्ञायाम् ३१६०।

ष्ट्रन् प्रत्ययः

१८१. धः कर्मणि ष्ट्रन् ३१६१।

१८२. दाम्नीशस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे ३१६२।

१८३. हल-सूकरयोः पुवः ३१६४।

इत्र-प्रत्ययः

१८४. अर्ति-लू-धू-सू-खन-सह-चर इत्रः ३१६५।

१८५. पुवः संज्ञायाम् ३१६६।

१८६. कर्तरि चर्षि-देवतयोः ३१६७।

क्त-प्रत्ययः

१८७. ञीतः क्तः ३०८८।

१८८. मतिबुद्धि-पूजार्थेभ्यश्च ३०८९।

## तृतीयाध्याये तृतीयः पादः

उणादि-प्रत्ययाः

उणादयः प्रत्ययाः वर्तमानेऽर्थे संज्ञायां विषये बहुलं भवन्ति। इमे प्रत्यया यतो विहितास्ततोऽन्यत्रापि भवन्तीति वेदितव्यम्। केचिदविहिता अपि प्रयोगत उन्नीयन्ते। 'वर्तमाने लट् ३.२.१२३' इत्यतः प्रवर्तमानो वर्तमानाधिकार इतो निवृत्तः।

१. उणादयो बहुलम् ३१६९।

२. भूतेऽपि दृश्यन्ते ३१७०।

भविष्यदधिकारः

३. भविष्यति गम्यादयः ३१७१।

'भविष्यति' इत्यधिक्रियते। इत आरभ्य 'अनद्यतने लुट् ३.३.१५' इत्यतः प्राक् भविष्यदर्थे प्रत्ययाः विहिताः।

लट् प्रत्ययः (लकारप्रत्ययः)

४. यावत्पुरानिपातयोर्लट् २७८३।

५. विभाषा कदा-कर्ह्योः २७८४।

६. किं वृत्ते लिप्सायाम् २७८५।

७. लिप्स्यमानसिद्धौ च २७८६।

८. लोडर्थलक्षणे च २७८७।

लिङ् प्रत्ययः (लकारप्रत्ययः)

९. लिङ् चोर्ध्व-मौहूर्तिके २७८८।

तुमुन्ण्वुल्प्रत्ययौ

१०. तुमुन्ण्वुलौ क्रियायां - क्रियार्थायाम् ३१७५।

इतः क्रियायां क्रियार्थायाम् इति अनुवतति ३.३.१२ इति यावत्।

११. भाववचनाश्च ३१८०।

१२. अण्कर्मणि च ३१८१।

लृट् प्रत्ययः (लकारप्रत्ययः)

१३. लृट् शेषे च २१९३।

लृटः स्थाने शतृशानचौ

१४. लृटः सद्वा ३१०७।

लुट् प्रत्ययः (लकारप्रत्ययः)

१५. अनद्यतने लुट् २१८५।

'भविष्यति' इति निवृत्तम्। इत उत्तरं त्रिषु कालेषु प्रत्ययाः।

घञ् प्रत्ययः ३.३.५५ इति यावत्

१६. पद-रुज-विश-स्पृशो घञ् ३१८२।

१७. सृ स्थिरे ३१८४।

भावाधिकारः

१८. भावे ३१८४।

'आक्रोशे नञ्यनिः ३.३.११२' इति यावदधिकारोऽयम्। इत उत्तरं भावे वाच्ये धातोः प्रत्ययाः भवन्तीति वेदितव्यम्।

'अकर्तरि च कारके संज्ञायाम्' इत्यधिकारः

१९. अकर्तरि च कारके संज्ञायाम् ३१८६।

अधिकारोऽयम् 'आक्रोशे नञ्यनिः ३.३.११२' इति यावत्। इत उत्तरं कर्तृवजिति कारके संज्ञायां विषये धातोः प्रत्ययाः भवन्ति।

२०. परिमाणाख्यायाम् सर्वेभ्यः।(घञ्) ३१९०।

२१. इङश्च। (अचोऽपवादो घञ्) ३१९१।
२२. उपसर्गे रुवः। (अपोऽपवादो घञ्) ३१९२।
२३. समि युद्रुदुवः। (अपोऽपवादो घञ्) ३१९४।
२४. श्रिणीभुवोऽनुपसर्गे ३१९५। (अजपोरपवादो घञ्)
२५. वौ क्षुश्रुवः। (अपोऽपवादो घञ्) ३१९६।
२६. अवोदोर्नियः। (अचोऽपवादो घञ्) ३१९७।

इतः अपोऽपवादो घञ् प्रत्ययः

२७. प्रे द्रुस्तुस्रुवः. ३१९८।
२८. निरभ्योः पूल्वोः ३१९९।
२९. उन्न्योर्ग्रः ३२००।
३०. कॄ धान्ये ३२०१।
३१. यज्ञे समि स्तुवः ३२०२।
३२. प्रे स्त्रोऽयज्ञे ३२०३।
३३. प्रथने वावशब्दे ३२०४।
३४. छन्दोनाम्नि च ३२०५।
३५. उदि ग्रहः ३२०७।
३६. समि मुष्टौ ३२०८।

अचोऽपवादो घञ् प्रत्ययः

३७. परिन्योर्नीणोर्द्यूताभ्रेषयोः ३२०९।
३८. परा-वनुपात्यय इणः३२१०।
३९. व्युपयोः शेतेः पर्याये ३२११।
४०. हस्तादाने चेरस्तेये ३२१२।
४१. निवास-चिति-शरीरोपसमा-धानेष्वादेश्च कः ३२१३।
४२. संघे चानौत्तराधर्ये ३२१४।

णच् प्रत्ययः

४३. कर्मव्यतिहारे णच् - स्त्रियाम् ३२१५।

इनुण् प्रत्ययः

४४. अभिविधौ भाव इनुण् ३२१८।

घञ् प्रत्ययः

४५. आक्रोशेऽवन्योर्ग्रहः ३२२०।
४६. प्रे लिप्सायाम् ३२२१।
४७. परौ यज्ञे ३२२२।
४८. नौ वृ धान्ये ३२२३।
४९. उदि श्रयति-यौति-पू-द्रुवः ३२२४। (अजपोरपवादः)
५०. विभाषाऽऽङि रुप्लुवोः ३२२५। (अपोऽपवादः)
५१. अवे ग्रहो वर्षप्रतिबन्धे ३२२६।
५२. प्रे वणिजाम् ३२२७।
५३. रश्मौ च ३२२८।
५४. वृणोते-राच्छादने ३२२९।
५५. परौ भुवोऽवज्ञाने ३२३०।

अच् प्रत्ययः

५६. एरच् ३२३१।

अप् प्रत्ययः ३.३.८७ इति यावत्

५७. ॠदोरप् ३२३२।

घञोऽपवादोऽप् प्रत्ययः

५८. ग्रह-वृ-दृ-निश्चि-गमश्च ३२३४।
५९. उपसर्गेऽदः३२३५।
६०. नौ ण च ३२३७।
६१. व्यध-जपो-रनुपसर्गे ३२३८।

६२. स्वन-हसोर्वा ३२३९।
६३. यमः समुप-निविषु च ३२४०।
६४. नौ गद-नद-पठ-स्वनः ३२४१।
६५. क्वणो वीणायां च ३२४२।
६६. नित्यं पणः परिमाणे ३२४३।
६७. मदोऽनुपसर्गे ३२४४।
६८. प्रमद-संमदौ हर्षे ३२४५।
६९. समुदोरजः पशुषु ३२४६।
७०. अक्षेषु ग्लहः ३२४७।
७१. प्रजने सर्तेः ३२४८।
७२. ह्वः सम्प्रसारणं च - न्यभ्युपविषु ३२४९।
७३. आङि युद्धे ३२५०।
७४. निपानमाहावः ३२५१।
७५. भावेऽनुपसर्गस्य ३२५२।
७६. हनश्च वधः ३२५३।
७७. मूर्तौ घनः ३२५४।
७८. अन्तर्घनो देशे ३२५५।
७९. अगारैकदेशे प्रघणः - प्रघाणश्च ३२५६।
८०. उद्घनोऽत्याधानम् ३२५७।
८१. अपघनोऽङ्गम् ३२५८।
८२. करणेऽयोविद्रुषु ३२५९।
८३. स्तम्बे क च ३२६०।
८४. परौ घः ३२६१।
८५. उपघ्न आश्रये ३२६३।
८६. संघोद्घौ गणप्रशंसयोः ३२६४।
८७. निघो निमितम् ३२६५।

क्त्रि-प्रत्ययः

८८. ड्वितः क्त्रिः ३२६६।

अथुच् प्रत्ययः

८९. ट्वितोऽथुच् ३२६७।

नङ् प्रत्ययः

९०. यज-याच-यत-विच्छ-प्रच्छ-रक्षो नङ् ३२६८।

नन् प्रत्ययः

९१. स्वपो नन् ३२६९।

कि प्रत्ययः

९२. उपसर्गे घोः किः ३२७०।
९३. कर्मण्यधिकरणे च ३२७१।

स्त्र्यधिकारः

क्तिन् प्रत्ययः

९४. स्त्रियां क्तिन् ३२७२।

अधिकारोऽयम् ३.३.११२ इति यावत्। अकर्तरि च कारके, भावे, स्त्रीलिङ्गे धातोः क्तिन् प्रत्ययो भवति घञजपामपवादः। अस्त्रियामिति पर्युदासाद् वाऽसरूपविधिर्नात्र प्रवर्तते। अतोऽस्मिन्नसरूपोऽपवादप्रत्यय उत्सर्गप्रत्ययं नित्यं बाधते।

९५. स्था-गा-पा-पचो भावे ३२७३।
९६. मन्त्रे वृषेष-पच-मन-विद-भू - वी-रा उदात्तः ३४२०।
९७. ऊति-यूति-जूति-साति-हेति-कीर्तयश्च ३२७४।

क्यप् प्रत्ययः

९८. व्रज-यजोर्भावे क्यप् ३२७५।
९९. संज्ञायां समज-निषद-निपत-मन-विद-षुञ्शीङ्-भृञिणः ३२७६।

श प्रत्ययः

१००. कृञः श च ३२७७।
१०१. इच्छा ३२७८।

अ प्रत्ययः

१०२. अ प्रत्ययात् ३२७९।

१०३. गुरोश्च हलः ३२८०।

अङ् प्रत्ययः

१०४. षिद्भिदादिभ्योऽङ् ३२८१।

१०५. चिन्ति-पूजि-कथि-कुम्बि-चर्चश्च ३२८२।

१०६. आतश्चोपसर्गे ३२८३।

युच् प्रत्ययः

१०७. ण्यासश्रन्थो युच् ३२८४।

ण्वुल् प्रत्ययः

१०८. रोगाख्यायां ण्वुल्बहुलम् ३२८५।

१०९. संज्ञायाम् ३२८६।

इञ् प्रत्ययः

११०. विभाषाख्यान-परिप्रश्नयोरिञ्च ३२८७।

ण्वुच् प्रत्ययः

१११. पर्यायार्हर्णोत्पत्तिषु ण्वुच् ३२८८।

अनि-प्रत्ययः

११२. आक्रोशे नञ्यनिः ३२८९।

इतः स्त्र्यधिकारो निवृत्तः।

भावधिकारश्च।

कृत्यल्युट्प्रत्ययानामर्थनिर्देशः।

११३. कृत्यल्युटो बहुलम् २८४१।

क्त-प्रत्ययः

११४. नपुंसके भावे क्तः ३०९०।

ल्युट् प्रत्ययः

११५. ल्युट् च ३२९०।

११६. कर्मणि च येन संस्पर्शात् कर्तुः - शरीरसुखम् ३२९१।

करणाधिकरणयोः प्रत्ययाः

११७. करणाधिकरणयोश्च ३२९३।

अधिकारोऽयम् ३.३.१२५ इति यावत्।

अधिकारेऽस्मिन् करणाधिकरणयोरर्थयोर्धातोः प्रत्यया विहिताः।

घ-प्रत्ययः

११८. पुंसि संज्ञायां घः प्रायेण ३२९६।

११९. गोचर-संचर-वह-व्रज-व्यजापण-निगमाश्च ३२९८।

घञ् प्रत्ययः

१२०. अवे तॄस्त्रोर्घञ् ३२९९।

१२१. हलश्च ३३००।

१२२. अध्यायन्यायोद्याव-संहाराश्च ३३०१।

१२३. उदङ्कोऽनुदके ३३०२।

१२४. जालमानायः ३३०३।

१२५. खनो घ च ३३०४।

कृच्छ्राकृच्छ्रार्थेषु प्रत्ययाः

खल् प्रत्ययः

१२६ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु - खल् ३३०५।

१२७. कर्तृकर्मणोश्च भूकृञोः ३३०८।

युच् प्रत्ययः

१२८. आतो युच् ३३०९।

१२९. छन्दसि गत्यर्थेभ्यः ३४२१।

१३०. अन्येभ्योऽपि दृश्यते ३४२२।

वर्तमानवत्प्रत्ययाः

१३१. वर्तमानसामीप्ये वर्तमानवद्वा २७८९।

भूतवत्प्रत्ययाः

१३२. आशंसायाम् भूतवच्च २७९०।

इतो लकारप्रत्यया:

लृट् प्रत्यय:

१३३. क्षिप्रवचने लृट् २७९१।

लिङ् प्रत्यय:

१३४. आशंसावचने लिङ् २७९२।

१३५. नानद्यतनवत्क्रिया-प्रबन्ध -
सामीप्ययो: २७९३।

१३६. भविष्यति -
मर्यादावचनेऽवरस्मिन् २७९४।

१३७. कालविभागे -
चानहोरात्राणाम् २७९५।

१३८. परस्मिन्विभाषा २७९६।

लृङ् प्रत्यय:

१३९. लिङ्निमित्ते लृङ् -
क्रियातिपत्तौ २२२९।

१४०. भूते च २७९७।

१४१. वोताप्यो: २७९८।

लट् प्रत्यय:

१४२. गर्हायां लडपिजात्वो: २७९९।

लिङ् प्रत्यय:

१४३. विभाषा कथमि लिङ् च २८००।

लिङ्लृटौ प्रत्ययौ

१४४. किंवृत्ते लिङ्लृटौ २८०१।

१४५. अनवक्लृप्त्यमर्षयो-
-रकिंवृत्तेऽपि २८०२।

१४६. किंकिलास्त्यर्थेषु लृट् २८०३।

१४७. जातुयदोर्लिङ् २८०४।

१४८. यच्च-यत्रयो: २८०५।

१४९. गर्हायाञ्च २८०६।

१५०. चित्रीकरणे च २८०७।

१५१. शेषे लृडयदौ २८०८।

लिङ् प्रत्यय:

१५२. उताप्यो: समर्थयोर्लिङ् २८०९।

१५३. कामप्रवेदनेऽकच्चिति २८१०।

१५४. सम्भावनेऽलमिति चेत् -
सिद्धाप्रयोगे २८११।

१५५. विभाषा धातौ सम्भावन -
वचनेऽयदि २८१२।

१५६. हेतुहेतुमतोर्लिङ् २८१३।

लिङ्लोटौ प्रत्ययौ

१५७. इच्छार्थेषु लिङ्लोटौ २८१४।

तुमुन् प्रत्यय: (अयं कृत्प्रत्यय:)

१५८. समानकर्तृकेषु तुमुन् ३१७६।

लिङ्प्रत्यय:

१५९. लिङ् च २८१५।

१६०. इच्छार्थेभ्यो विभाषा -
वर्तमाने २८१६।

१६१. विधि-निमन्त्रणा-मन्त्रणा-धीष्ट-
सम्प्रश्न-प्रार्थनेषु लिङ् २२०८।

लोट्प्रत्यय:

१६२. लोट् च २१९४।

१६३. प्रैषातिसर्ग-प्राप्तकालेषु -
कृत्याश्च २८१७।

१६४. लिङ् चोर्ध्वमौहूर्त्तिके २८१८।

१६५. स्मे लोट् २८१९।

१६६. अधीष्टे च २८२०।

तुमुन् प्रत्यय: (अयं कृत् प्रत्यय:)

१६७. कालसमयवेलासु तुमुन् ३१७९।

लिङ्प्रत्यय:

१६८. लिङ् यदि २८२१।

कृत्य-तृच्-णिनि-लिङ्-लोट्-
प्रत्ययानामर्थाः

१६९. अर्हे कृत्यतृचश्च २८२२।
१७०. आवश्यकाध-
मर्ण्ययोर्णिनिः ३३११।
१७१. कृत्याश्च ३३१२।
१७२. शकि लिङ् च २८२३।
१७३. आशिषि लिङ्लोटौ २१९५।

क्तिच्-क्त-प्रत्ययौ (इमौ कृत्प्रत्ययौ)

१७४. क्तिच्क्तौ च संज्ञायाम् ३३१३।

लुङ्-लङ्-प्रत्ययौ

१७५. माङि लुङ् २२१९।
१७६. स्मोत्तरे लङ् च २२२०।

## तृतीयाध्याये चतुर्थः पादः

प्रत्ययार्थाः

१. धातुसंबन्धे प्रत्ययाः २८२४।
२. क्रियासमभिहारे लोट् लोटो -
हिस्वौ वा च तध्वमोः २८२५।
३. समुच्चयेऽन्यतरस्याम् २८२६।
४. यथाविध्यनुप्रयोगः -
पूर्वस्मिन् २८२७।
५. समुच्चये सामान्यवचनस्य २८२८।
६. छन्दसि लुङ्-लङ्-लिटः ३४२३।

लेट् प्रत्ययः

७. लिङर्थे लेट् ३४२४।
८. उपसंवादा-शङ्कयोश्च ३४३१।

इत आरभ्य ३.४.१७ इति यावत् वैदिकाः
कृत्प्रत्ययाः

९. तुमर्थे से-सेनसे-ऽसेन्क्से-कसे-
नध्यै-अध्यैन्-कध्यै-कध्यैन्-
शध्यै-शध्यैन्-तवै-
तवेङ्-तवेनः ३४३६।
१०. प्रयै रोहिष्यै अव्यथिष्यै ३४३७।
११. दृशे विख्ये च ३४३८।

णमुल्-कमुल् प्रत्ययौ

१२. शकि णमुल्कमुलौ ३४३९।

तोसुन्-कसुन् प्रत्ययौ

१३. ईश्वरे तोसुन्कसुनौ ३४४०।

केन्-केन्य-त्वन्-प्रत्ययाः

१४. कृत्यार्थे तवै केन्केन्यत्वनः ३४४१।

एश् प्रत्ययः

१५. अवचक्षे च २४४२।

तोसुन् प्रत्ययः

१६. भावलक्षणे स्थेण्कृञ्वदि-चरि-
हु-तमि-जनिभ्यस्तोसुन् ३४४३।

कसुन् प्रत्ययः

१७. सृपितृदोः कसुन् ३४४४।

इतो लौकिकाः कृत्प्रत्ययाः

क्त्वा प्रत्ययः

१८. अलंखल्वोः प्रतिषेधयोः -
प्राचां क्त्वा ३३१६।
१९. उदीचां माङो व्यतीहारे ३३१७।
२०. परावरयोगे च ३३१९।
२१. समान-कर्तृकयोः पूर्वकाले ३३२०।

णमुल् प्रत्यय

२२. आभीक्ष्ण्ये णमुल् च ३३४३।

क्त्वा-णमुल्-प्रत्ययौ

२३. न यद्यनाकाङ्क्षे ३३४४।
२४. विभाषाऽग्रे-प्रथम-पूर्वेषु ३३४५।

खमुञ् प्रत्ययः

२५. कर्मण्याक्रोशे कृञः खमुञ् ३३४६।

णमुल् प्रत्ययः

२६. स्वादुमि णमुल् ३३४७।

२७. अन्यथैवं कथमित्थंसु – सिद्धाप्रयोगश्चेत् ३३४८।

२८. यथातथयोरसूया– प्रतिवचने ३३४९।

२९. कर्मणि दृशिविदोः साकल्ये ३३५०।

३०. यावति विन्दजीवोः ३३५१।

३१. चर्मोदरयोः पूरे ३३५२।

३२. वर्षप्रमाण ऊलोपश्चास्या – न्यतरस्याम् ३३५३।

३३. चेले क्नोपेः ३३५४।

३४. निमूल-समूलयोः कषः ३३५५।

३५. शुष्क–चूर्ण–रूक्षेषु पिषः ३३५६।

३६. समूलाकृतजीवेषु हन्कृञ्ग्रहः ३३५७।

३७. करणे हनः ३३५८।

३८. स्नेहने पिषः ३३५९।

३९. हस्ते वर्तिग्रहोः ३३६०।

४०. स्वे पुषः ३३६१।

४१. अधिकरणे बन्धः ३३६२।

४२. संज्ञायाम् ३३६३।

४३. कर्त्रोर्जीवपुरुषयोर्नशि– वहोः ३३६४।

४४. ऊर्ध्वे शुषिपूरोः ३३६५।

४५. उपमाने कर्मणि च ३३६६।

४६. कषादिषु – यथाविध्यनुप्रयोगः ३३६७।

४७. उपदंशस्तृतीयायाम् ३३६८।

४८. हिंसार्थानां च – समानकर्मकाणाम् ३३६९।

४९. सप्तम्यां चोपपीडरुधकर्षः ३३७०।

५०. समासत्तौ ३३७१।

५१. प्रमाणे च ३३७२।

५२. अपादाने च परीप्सायाम् ३३७३।

५३. द्वितीयायां च ३३७४।

५४. स्वाङ्गेऽध्रुवे ३३७६।

५५. परिक्लिश्यमाने च ३३७७।

५६. विशि–पति–पदि–स्कन्दां – व्याप्यमानासेव्यमानयोः ३३७८।

५७. अस्यति–तृषोः क्रियान्तरे – कालेषु ३३७९।

५८. नाम्न्यादिशिग्रहोः ३३८०।

क्त्वा–णमुल्–प्रत्ययौ

५९. अव्ययेऽयथाभिप्रेताख्याने – कृञः क्त्वाणमुलौ ३३८१।

६०. तिर्यच्यपवर्गे ३३८२।

६१. स्वाङ्गे तस्प्रत्यये कृभ्वोः ३३८३।

६२. नाधार्थप्रत्यये च्व्यर्थे ३३८४।

६३. तूष्णीमि भुवः ३३८५।

६४. अन्वच्या–नुलोम्ये ३३८६।

तुमुन् प्रत्ययः

६५. शक–धृष–ज्ञा–ग्ला–घट–रभ– लभ–क्रम–सहार्हास्त्यर्थेषु – तुमुन् ३१७७।

६६. पर्याप्तिवचनेष्वलमर्थेषु ३१७८।

लकाराणां कृत्प्रत्ययानां चार्थाः

६७. कर्तरि कृत् २८३२।

६८. भव्य-गेय-प्रवचनीयोपस्थानीय-जन्याप्लाव्यापात्या वा २८९४।
६९. लः कर्मणि च भावे -चाकर्मकेभ्यः २१५२।
७०. तयोरेव कृत्य-क्त-खलर्थाः २८३३।
७१. आदिकर्मणि क्तः कर्तरि च ३०५३।
७२. गत्यर्था-कर्मकश्लिष-शीङ्-स्थास -वस-जन-रुह-जीर्यतिभ्यश्च ३०८६।
७३. दाश-गोघ्नौ संप्रदाने ३१७२।
७४. भीमादयोऽपादाने ३१७३।
७५. ताभ्या-मन्यत्रोणादयः ३१७४।
७६. क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यवसानार्थेभ्यः ३०८७।

लाधिकारः

७७. लस्य २१५३।

लस्येत्ययमधिकारः ३.४.११२ इति यावत्। अकार उच्चारणार्थः। दश लकारा अनुबन्धविशिष्टा विहिता, अर्थविशेषे, काल--विशेषे च। त एवोत्सृष्टानुबन्धा अत्र गृहीताः। लकारमात्रं स्थानित्वेनाधिक्रियते। यदित ऊर्ध्वमनुक्रमिष्यते लस्येत्येवं तद्वेदितव्यम्।

७८. तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातांझ-थासाथांध्व-मिड्वहि-महिङ् २१५४।
७९. टित आत्मनेपदानां टेरे २२३३।
८०. थासः से २२३६।
८१. लिटस्तझयोरेशिरेच् २२४१।
८२. परस्मैपदानां णलतुसुस् -थलथुस-णल्वमाः २१७३।
८३. विदो लटो वा २४६४।
८४. ब्रुवः पञ्चाना-मादित -आहो ब्रुवः २४५०।
८५. लोटो लङ्वत् २१९८।
८६. एरुः २१९६।
८७. सेर्ह्यपिच्च २२०१।
८८. वा छन्दसि ३५५२।
८९. मेर्निः २२०३।
९०. आमेतः २२५१।
९१. सवाभ्यां वामौ २२५२।
९२. आडुत्तमस्य पिच्च २२०४।
९३. एत ऐ २२५३।
९४. लेटोऽडाटौ ३४२७।
९५. आत ऐ ३४२९।
९६. वैतोऽन्यत्र ३४३०।
९७. इतश्च लोपः परस्मैदेषु ३४२६।
९८. स उत्तमस्य ३४२८।
९९. नित्यं ङितः २२००।
१००. इतश्च २२०७।
१०१. तस्थस्थमिपां तान्तन्तामः २१९९।
१०२. लिङः सीयुट् २२५५।
१०३. यासुट् परस्मैपदेषूदात्तो -ङिच्च २२०९।
१०४. किदाशिषि २२१६।
१०५. झस्य रन् २२५६।
१०६. इटोऽत् २२५७।

१०७. सुट् तिथोः २२१० ।

१०८. झेर्जुस् २२१३ ।

१०९. सिजभ्यस्तविदिभ्यश्च २२२६ ।

११०. आतः २२२७ ।

१११. लङः शाकटायनस्यैव २४६३ ।

११२. द्विषश्च २४३५ ।

सार्वधातुकसंज्ञा

११३. तिङशित्सार्वधातुकम् २१६६ ।

आर्धधातुकसंज्ञा

११४. आर्धधातुकं शेषः २१८७ ।

११५. लिट् च २१७२ ।

११६. लिङाशिषि २२१५ ।

११७. छन्दस्युभयथा ३४३५ ।

## चतुर्थाध्याये प्रथमः पादः

प्रातिपदिकाधिकारः

१. ङ्याप्प्रातिपदिकात् १८२ ।

अधिकारोऽयमापञ्चमाध्यायपरिसमाप्तेः ५.४.१६० इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यते ङ्याप्प्रातिपदिकादित्येवं तद् वेदितव्यम् । अत्र स्वादिषु कप्पर्यन्तेषु प्रत्ययेषु प्रकृतिरधिक्रियते । अस्मिन्नधिकारे त्रिविधाः सन्ति प्रत्ययाः । स्वादिप्रत्ययाः, स्त्रीप्रत्ययाः, तद्धितप्रत्ययाश्च ।

स्वादि-प्रत्ययाः

२. स्वौजसमौट्-छष्टाभ्यांभिस्-ङेभ्यां-भ्यस्-ङसिभ्यांभ्यस्-ङसोसाम्-ङ्योस्सुप् १८३ ।

स्त्र्यधिकारः

३. स्त्रियाम् ४५३ ।

अधिकारोऽयम् ४.१.८१ इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यते स्त्रियामित्येवं तद् वेदितव्यम् । ङ्याप्प्रातिपदिकादिति सर्वाधिकारेऽपि प्रातिपदिकमात्रमत्र प्रकरणे संबध्यते, ङ्यापोरनेनैव विधानात् ।

टाप्-प्रत्ययः

४. अजाद्यतष्टाप् ४५४ ।

ङीप्-प्रत्ययः

५. ऋन्नेभ्यो ङीप् ३०६ ।

६. उगितश्च ४५५ ।

७. वनो र च ४५६ ।

८. पादोऽन्यतरस्याम् ४५७ ।

९. टाबृचि ४५८ ।

१०. न षट्स्वस्रादिभ्यः ३०८ ।

११. मनः ४५९ ।

१२. अनो बहुव्रीहेः ४६० ।

डाप्-प्रत्ययः

१३. डाबुभाभ्यामन्यतरस्याम् ४६१ ।

अनुपसर्जनाधिकारः

१४. अनुपसर्जनात् ४६९ ।

अधिकारोऽयम् । उत्तरसूत्रेषूपसर्जने प्रतिषेधं करोति । यदित ऊर्ध्वमनुक्रमिष्यतेऽनुपसर्जनादित्येवं तद् वेदितव्यम् ।

ङीप्-प्रत्ययः

१५. टिड्ढाणञ्-द्वयसज्दघ्नञ्-मात्रच्-तयप्-ठक्ठञ्कञ्-क्वरपः ४७० ।

१६. यञश्च ४७१ ।

ष्फप्रत्ययः

१७. प्राचां ष्फ तद्धितः ४७३ ।

१८. सर्वत्र लोहितादिकतन्तेभ्यः ४७६ ।

१९. कौरव्यमाण्डूकाभ्यां च ४७७ ।

ङीप्-प्रत्ययः

२०. वयसि प्रथमे ४७८।
२१. द्विगोः ४७९।
२२. अपरिमाण-बिस्ताचित-कम्बल्येभ्यो न तद्धितलुकि ४८०।
२३. काण्डान्तात्क्षेत्रे ४८१।
२४. पुरुषात्प्रमाणेऽन्यतरस्याम् ४८२।
२५. बहुव्रीहेरूधसो ङीष् ४८४।
२६. संख्याव्ययादेर्ङीप् ४८५।
२७. दामहायनान्ताच्च ४८६।
२८. अन उपधालोपिनोऽन्यतरस्याम् ४६२।
२९. नित्यं संज्ञाछन्दसोः ४८७।
३०. केवल-मामक-भागधेय-पापापर-समानार्य-कृत-सुमङ्गल-भेषजाच्च ४८८।
३१. रात्रेश्चाजसौ ३४४५।
३२. अन्तर्वत्पतिवतोर्नुक् ४८९।
३३. पत्युर्नो यज्ञसंयोगे ४९०।
३४. विभाषा सपूर्वस्य ४९१।
३५. नित्यं सपत्न्यादिषु ४९२।
३६. पूतक्रतो-रै च ४९३।
३७. वृषाकप्यग्नि-कुसित-कुसीदाना-मुदात्तः ४९४।
३८. मनोरौ वा ४९५।
३९. वर्णादनुदात्तात्तोपधात्तो नः ४९६।

ङीष्-प्रत्ययः

४०. अन्यतो ङीष् ४९७।
४१. षिद्गौरादिभ्यश्च ४९८।
४२. जानपद-कुण्ड-गोणस्थल-भाज-नाग-काल-नील- कुश-कामुक-कबराद्- वृत्त्यमत्रा-वपना-कृत्रिमा-श्राणा-स्थौल्य-वर्णानाच्छादना-योविकार-मैथुनेच्छा-केश-वेशेषु ५००।
४३. शोणात्प्राचाम् ५०१।
४४. वोतो गुणवचनात् ५०२।
४५. बह्वादिभ्यश्च ५०३।
४६. नित्यं छन्दसि ३४४६।
४७. भुवश्च ३४४७।
४८. पुंयोगादाख्यायाम् ५०४।
४९. इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिमारण्य-यव-यवन-मातुलाचार्या-णामानुक् ५०५।
५०. क्रीतात्करणपूर्वात् ५०६।
५१. क्तादल्पाख्यायाम् ५०७।
५२. बहुव्रीहेश्चान्तोदात्तात् ५०८।
५३. अस्वाङ्गपूर्वपदाद्वा ५०९।
५४. स्वाङ्गाच्चोपसर्जना-दसंयोगोपधाद् ५१०।
५५. नासिकोदरौष्ठ-जङ्घा-दन्त-कर्ण-शृङ्गाच्च ५११।
५६. न क्रोडादिबह्वचः ५१२।
५७. सहनञ्विद्यमानपूर्वाच्च ५१३।
५८. नखमुखात्संज्ञायाम् ५१४।
५९. दीर्घजिह्वी चच्छन्दसि ३४४८।
६०. दिक्पूर्वपदान्ङीप् ५१५।
६१. वाहः ५१६।

६२. सख्य-शिश्वीति भाषायाम् ५१७।

६३. जातेरस्त्रीविषया-दयोपधात् ५१८।

६४. पाक-कर्ण-पर्ण-पुष्प-फल-मूल-वालोत्तर-पदाच्च ५१९।

६५. इतो मनुष्यजातेः ५२०।

ऊङ्-प्रत्ययः

६६. ऊङुतः ५२१।

६७. बाह्वन्तात्संज्ञायाम् ५२२।

६८. पङ्गोश्च ५२३।

६९. ऊरूत्तरपदादौपम्ये ५२४।

७०. संहित-शफ-लक्षण-वामादेश्च ५२५।

७१. कद्रु-कमण्डल्वोश्छन्दसि ३४४९।

७२. संज्ञायाम् ५२६।

ङीन्-प्रत्ययः

७३. शार्ङ्गरवाद्यञो ङीन् ५२७।

चाप्-प्रत्ययः

७४. यङश्चाप् ५२८।

७५. आवट्याच्च ५२९।

## अथ तद्धिताधिकारः

७६. तद्धिताः ५३०।

अधिकारोऽयमापञ्चमाध्यायपरिसमाप्तेः ५.४.१६० इति यावत्। ये प्रत्यया इत ऊर्ध्वमनुक्रमिष्यन्ते, तद्धितसंज्ञास्ते वेदितव्याः।

ति-प्रत्ययः

७७. यूनस्तिः ५३१।

ष्यङ्-प्रत्ययः

७८. अणिञोरनार्षयोर्गुरूपोत्तमयोः - ष्यङ् गोत्रे ११९८।

७९. गोत्रावयवात् ११९९।

८०. क्रौड्यादिभ्यश्च १२००।

८१. दैवयज्ञि-शौचिवृक्षि-सात्यमुग्रि-काण्डेविद्धिभ्यो-ऽन्यतरस्याम् १२०१।

समर्थाधिकारः

८२. समर्थानां प्रथमाद्वा १०७२।

अधिकारोऽयम्। त्रयमप्यधिक्रियते - समर्थानामिति, प्रथमादिति, वा इति च। स्वार्थिकप्रत्ययावधिश्चायमधिकारः 'प्राग्दिशो विभक्तिः ५.३.१' इति यावत्। स्वार्थिकेषु ह्यस्योपयोगो नास्ति। विकल्पोऽपि तत्रा-नवस्थितः। केचिन्नित्यमेव भवन्ति। समर्थानां प्रथमाद्वा, इति सूत्रस्य लक्षणवाक्यानि 'तस्यापत्यम्' तेन रक्तं रागाद्' 'तत्र भवः' इत्येवमादीनि भविष्यन्ति। तेषु सामर्थ्ये सति प्रथमनिर्दिष्टादेव विकल्पेन प्रत्ययो भवतीति वेदितव्यम्।

अत्र ध्यातव्यम्। इत आरभ्य 'प्राग्दिशो विभक्तिः ५.३.१' इत्यतः प्राक् १४१ तद्धितार्था अस्थूलाक्षरैर्निर्दिष्टाः सन्ति। ते चार्था अण्-ठक्-यत्-छ-ठञ् इत्येतेषु पञ्चसु महोत्सर्गप्रत्ययेषु विभक्ताः सन्ति।

इदानीमेतेषां पञ्चमहोत्सर्गप्रत्ययाना--मधिकाराः पृथक्कृत्य प्रदर्श्यन्ते। अत्र यानि सूत्राणि तद्धितार्थान् निर्दिशन्ति, तान्यग्रे--ऽस्थूलाक्षरैर्निर्दिष्टानि सन्ति।

## अथ अणधिकारः

### प्राग्दीव्यतीयः

८३. प्राग्दीव्यतोऽण् १०७३।

अधिकारोऽयम्। तेन दीव्यति खनति

४१. गौः सादसादिसारथिषु ३७७५।
४२. कुरु-गार्हपत-रिक्त-गुर्वसूत-जरत्यश्लील-दृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ३७७६।
४३. चतुर्थी तदर्थे ३७७७।
४४. अर्थे ३७७८।
४५. क्ते च ३७७९।
४६. कर्मधारयेऽनिष्ठा ३७८०।
४७. अहीने द्वितीया ३७८१।
४८. तृतीया कर्मणि ३७८२।
४९. गति-रनन्तरः ३७८३।
५०. तादौ च निति कृत्यतौ ३७८४।
५१. तवै चान्तश्च युगपत् ३७८५।
५२. अनिगन्तोऽञ्चतौ वप्रत्यये ३७८६।
५३. न्यधी च ३७८७।
५४. ईषदन्यतरस्याम् ३७८८।
५५. हिरण्य-परिमाणं धने ३७८९।
५६. प्रथमोऽचिरोपसंपत्तौ ३७९०।
५७. कतरकतमौ कर्मधारये ३७९१।
५८. आर्यो ब्राह्मण-कुमारयोः ३७९२।
५९. राजा च ३७९३।
६०. षष्ठी प्रत्येनसि ३७९४।
६१. क्ते नित्यार्थे ३७९५।
६२. ग्रामः शिल्पिनि ३७९६।
६३. राजा च प्रशंसायाम् ३७९७।

पूर्वपदाद्युदात्तस्वराधिकारः

६४. आदिरुदात्तः ३७९८।

इत आदिरुदात्त इत्येतदधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यते, तत्र पूर्व-पदस्यादिरुदात्तो भवतीत्येवं तद्वेदितव्यम्।

६५. सप्तमीहारिणौ-धर्म्येऽहरणे ३७९९।
६६. युक्ते च ३८००।
६७. विभाषाध्यक्षे ३८०१।
६८. पापं च शिल्पिनि ३८०२।
६९. गोत्रान्तेवासि-माणव-ब्राह्मणेषु क्षेपे ३८०३।
७०. अङ्गानि मैरेये ३८०४।
७१. भक्ताख्यास्तदर्थेषु ३८०५।
७२. गो-बिडाल-सिंह-सैन्धवेषूपमाने ३८०६।
७३. अके जीविकार्थे ३८०७।
७४. प्राचां क्रीडायाम् ३८०८।
७५. अणि नियुक्ते ३८०९।
७६. शिल्पिनि चाकृञः ३८१०।
७७. संज्ञायां च ३८११।
७८. गोतन्तियवं पाले ३८१२।
७९. णिनि ३८१३।
८०. उपमानं शब्दार्थ-प्रकृतावेव ३८१४।
८१. युक्ता-रोह्यादयश्च ३८१५।
८२. दीर्घकाशतुषभ्राष्ट्रवटं जे ३८१६।
८३. अन्त्यात्पूर्वं बह्वचः ३८१७।
८४. ग्रामेऽनिवसन्तः ३८१८।
८५. घोषादिषु च ३८१९।
८६. छात्र्यादयः शालायाम् ३८२०।
८७. प्रस्थेऽवृद्धमकर्क्यादीनाम् ३८२१।
८८. मालादीनां च ३८२२।

८९. अमहन्नवं-
नगरेऽनुदीचाम् ३८२३।
९०. अर्मे चावर्णं द्व्यच् त्र्यच् ३८२४।
९१. न भूताधिक-संजीव-
मद्राश्मकज्जलम् ३८२५।

पूर्वपदान्तोदात्तस्वराधिकारः

९२. अन्तः ३८२६।

अन्त इत्यधिकृतम्। यदित उत्तरं वक्ष्यते, तत्र पूर्वस्यान्त उदात्तो भवतीत्येव--मधिकृतं वेदितव्यम्।

९३. सर्वं गुणकार्त्स्न्ये ३८२७।
९४. संज्ञायां गिरि-निकाययोः ३८२८।
९५. कुमार्यां वयसि ३८२९।
९६. उदकेऽकेवले ३८३०।
९७. द्विगौ क्रतौ ३८३१।
९८. सभायां नपुंसके ३८३२।
९९. पुरे प्राचाम् ३८३३।
१००. अरिष्ट-गौडपूर्वे च ३८३४।
१०१. न हास्तिन-फलक-
मार्देयाः ३८३५।
१०२. कुसूल-कूप-कुम्भशालं
बिले ३८३६।
१०३. दिक्शब्दा ग्रामजनपदाख्यान -
चानराटेषु ३८३७।
१०४. आचार्योपसर्जनश्चान्ते-
वासिनि ३८३८।
१०५. उत्तरपदवृद्धौ सर्वं च ३८३९।
१०६. बहुव्रीहौ विश्वं संज्ञायाम् ३८४०।
१०७. उदराश्वेषुषु ३८४१।
१०८. क्षेपे ३८४२।
१०९. नदी बन्धुनि ३८४३।
११०. निष्ठोपसर्गपूर्व-मन्यतरस्याम्
३८४४।

उत्तरपदाद्युदात्तस्वराधिकारः

१११. उत्तरपदादिः ३८४५।

उत्तरपदादिरित्येतदधिकृतम्। यदित ऊर्ध्वमनुक्रमिष्यते, तत्र उत्तरपदस्यादिरुदात्तो भवतीत्येवमधिकृतं वेदितव्यम्। उत्तरपद--स्येत्येतदापादपरिसमाप्तेः।

११२. कर्णो वर्णलक्षणात् ३८४६।
११३. संज्ञौपम्ययोश्च ३८४७।
११४. कण्ठपृष्ठग्रीवाजङ्घं च ३८४८।
११५. शृङ्ग-मवस्थायां च ३८४९।
११६. नञो जरमर-मित्रमृताः ३८५०।
११७. सोर्मनसी अलो-मोषसी ३८५१।
११८. क्रत्वादयश्च ३८५२।
११९. आद्युदात्तं द्व्यच्छन्दसि ३८५३।
१२०. वीरवीर्यौ च ३८५४।
१२१. कूल-तीर-तूल-मूल-शालाक्ष-
सममव्ययीभावे ३८५५।
१२२. कंसमन्थशूर्पपाय्यकाण्डं
द्विगौ ३८५६।
१२३. तत्पुरुषे शालायां नपुंसके ३८५७।
१२४. कन्था च ३८५८।
१२५. आदिश्चिहणादीनाम् ३८५९।
१२६. चेलखेटकटुककाण्डं
गर्हायाम् ३८६०।
१२७. चीरमुपमानम् ३८६१।
१२८. पललसूपशाकं मिश्रे ३८६२।

१२९. कूलसूदस्थलकर्षाः संज्ञायाम् ३८६३।
१३०. अकर्मधारये राज्यम् ३८६४।
१३१. वर्ग्यादयश्च ३८६५।
१३२. पुत्रः पुम्भ्यः ३८६६।
१३३. नाचार्यराजर्त्विक्संयुक्त – ज्ञात्याख्येभ्यः ३८६७।
१३४. चूर्णादीन्यप्राणिषष्ठ्याः ३८६८।
१३५. षट् च काण्डादीनि ३८६९।
१३६. कुण्डं वनम् ३८७०।
१३७. प्रकृत्या भगालम् ३८७१।
१३८. शितेर्नित्याबह्वज्बहुव्रीहा – वभसत् ३८७२।
१३९. गतिकारकोपपदात्कृत् ३८७३।
१४०. उभे वनस्पत्यादिषु – युगपत् ३८७४।
१४१. देवताद्वन्द्वे च ३८७५।
१४२. नोत्तरपदेऽनुदात्तादावपृथिवी–रुद्रपूषमन्थिषु ३८७६।

उत्तरपदान्तोदात्तस्वरप्रकरणम्

१४३. अन्तः ३८७७।

अन्त इत्येतदधिकृतमापादान्तम्। यदित ऊर्ध्वमनुक्रमिष्यते, तत्र समासस्योत्तर–पदस्यान्त उदात्तो भवतीत्येवं तद् वेदितव्यम्।

१४४. थाथघञ्क्ताजबित्रकाणाम् ३८७८।
१४५. सूपमानात् क्तः ३८७९।
१४६. संज्ञायामनाचितादीनाम् ३८८०।
१४७. प्रवृद्धादीनां च ३८८१।
१४८. कारकाद्दत्तश्रुतयो– रेवाशिषि ३८८२।
१४९. इत्थंभूतेन कृतमिति च ३८८३।
१५०. अनो भावकर्मवचनः ३८८४।
१५१. मन्क्तिन्व्याख्यान–शयनासन–स्थान–याजकादि–क्रीताः ३८८५।
१५२. सप्तम्याः पुण्यम् ३८८६।
१५३. ऊनार्थ–कलहं तृतीयायाः ३८८७।
१५४. मिश्रं चानुपसर्गमसंधौ ३८८८।
१५५. नञो गुणप्रतिषेधे संपाद्यर्ह–हितालमर्थास्तद्धिताः ३८८९।
१५६. ययतोश्चातदर्थे ४८९०।
१५७. अच्कावशक्तौ ३८९१।
१५८. आक्रोशे च ३८९२।
१५९. संज्ञायाम् ३८९३।
१६०. कृत्यो–केष्णुच्चार्वादयश्च ३८९४।
१६१. विभाषा तृन्नन्नतीक्ष्ण–शुचिषु ३८९५।
१६२. बहुव्रीहाविद–मेतत्तद्भ्यः–प्रथमपूरणयोः–क्रियागणने ३८९६।
१६३. संख्यायाः स्तनः ३८९७।
१६४. विभाषा छन्दसि ३८९८।
१६५. संज्ञायां मित्राजिनयोः ३८९९।
१६६. व्यवायिनोऽन्तरम् ३९००।
१६७. मुखं स्वाङ्गम् ३९०१।
१६८. नाव्ययदिक्शब्द–गोमहत्स्थूल – मुष्टि–पृथु–वत्सेभ्यः ३९०२।
१६९. निष्ठोपमाना–दन्यतरस्याम् ३९०३

१७०. जाति-काल-सुखादिभ्यो-ऽनाच्छादनात् क्तोऽकृत-मित-प्रतिपन्नाः ३९०४।
१७१. वा जाते ३९०५।
१७२. नञ्सुभ्याम् ३९०६।
१७३. कपि पूर्वम् ३९०७।
१७४. ह्रस्वान्तेऽन्त्यात्पूर्वम् ३९०८।
१७५. बहोर्नञ्वदुत्तरपदभूम्नि ३९०९।
१७६. न गुणादयोऽवयवाः ३९१०।
१७७. उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ३९११।
१७८. वनं समासे ३९१२।
१७९. अन्तः ३९१३।
१८०. अन्तश्च ३९१४।
१८१. न निविभ्याम् ३९१५।
१८२. परे-रभितोभावि मण्डलम् ३९१६।
१८३. प्रादस्वाङ्गं संज्ञायाम् ३९१७।
१८४. निरुदकादीनि च ३९१८।
१८५. अभेर्मुखम् ३९१९।
१८६. अपाच्च ३९२०।
१८७. स्फिग-पूत-वीणाञ्जोऽध्व-कुक्षि-सीर-नामनाम च ३९२१।
१८८. अधे-रुपरिस्थम् ३९२२।
१८९. अनो-रप्रधान-कनीयसी ३९२३।
१९०. पुरुषश्चान्वादिष्टः ३९२४।
१९१. अतेरकृत्पदे ३९२५।
१९२. ने-रनिधाने ३९२६।
१९३. प्रतेरंश्वादयस्तत्पुरुषे ३९२७।
१९४. उपाद् द्व्यजजिन-मगौरादयः ३९२८।
१९५. सोरवक्षेपणे ३९२९।
१९६ विभाषोत्पुच्छे ३९३०।
१९७. द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ३९३१।
१९८. सक्थं चाक्रान्तात् ३९३२।
१९९. परादिश्छन्दसि बहुलम् ३९३३।

## षष्ठाध्याये तृतीयः पादः

### 'उत्तरपदे' इत्यधिकारः

१. अलुगुत्तरपदे ९५८।

'अलुगिति' च 'उत्तरपदे' इति च एतदधिकृतं वेदितव्यम्। यदित ऊर्ध्वमनु--क्रमिष्यतेऽलुगुत्तरपदे इत्येवं तद् वेदितव्यम्। अत्र विवेकः, 'अलुगिति' ६.३.२४ इत्यन्त-मधिक्रियते 'उत्तरपदे' इति च पादान्तमधिक्रियते।

### उत्तरपदेऽलुक्प्रकरणम्

२. पञ्चम्याः स्तोकादिभ्यः ९५९ ।
३. ओजः सहोऽम्भस्तम-सस्तृतीयायाः ९६०।
४. मनसः संज्ञायाम् ९६१।
५. आज्ञायिनि च ९६२।
६. आत्मनश्च पूरणे ९६३।
७. वैयाकरणाख्यायां चतुर्थ्याः ९६४।
८. परस्य च ९६५।
९. हलदन्तात्सप्तम्याः संज्ञायाम् ९६६।
१०. कारनाम्नि च प्राचां हलादौ ९६८।
११. मध्याद् गुरौ ९६९।
१२. अमूर्धमस्तकात्स्वाङ्गा-दकामे १७०।
१३. बन्धे च विभाषा १७१।

१४. तत्पुरुषे कृति बहुलम् १७२।
१५. प्रावृट्शरत्कालदिवां जेः १७३।
१६. विभाषा वर्षक्षरशरवरात् १७४।
१७. घकालतनेषु कालनाम्नः १७५।
१८. शयवासवासिष्वकालात् १७६।
१९. नेन्सिद्धबध्नातिषु च १७७।
२०. स्थे च भाषायाम् १७८।
२१. षष्ठ्या आक्रोशे १७९।
२२. पुत्रेऽन्यतरस्याम् १८०।
२३. ऋतो विद्यायोनिसम्बन्धेभ्यः १८१।
२४. विभाषा स्वसृपत्योः १८२।

उत्तरपद आनङ्

२५. आनङृतो द्वन्द्वे ९२१।
२६. देवताद्वन्द्वे च ९२२।
२७. ईदग्नेः सोमवरुणयोः ९२३।
२८. इद् वृद्धौ ९२५।
२९. दिवो द्यावा ९२६।
३०. दिवसश्च पृथिव्याम् ९२७।
३१. उषासोषसः ९२८।
३२. मातरपितरा-वुदीचाम् ९२९।
३३. पितरामातरा - च च्छन्दसि ३५२८।

उत्तरपदे पुंवद्भावः

३४. स्त्रियाः पुंवद्भाषितपुंस्का- -दनूङ् समानाधिकरणे स्त्रिया-मपूरणी-प्रियादिषु ८३१।
३५. तसिलादिष्वाकृत्वसुचः ८३६।
३६. क्यङ्मानिनोश्च ८३७।
३७. न कोपधायाः ८३८।
३८. संज्ञापूरण्योश्च ८३९।
३९. वृद्धिनिमित्तस्य च - तद्धितस्यारक्तविकारे ८४०।
४०. स्वाङ्गाच्चेतः ८४१।
४१. जातेश्च ८४२।
४२. पुंवत्कर्मधारय-जातीय- देशीयेषु ७४६।

उत्तरपदे ह्रस्वः

४३. घ-रूप-कल्प-चेलड्-ब्रुव- गोत्र-मत-हतेषु ङ्योऽनेकाचो ह्रस्वः ९८५।
४४. नद्याः शेषस्यान्यतरस्याम् ९८६।
४५. उगितश्च ९८७।

उत्तरपद आत्त्वम्

४६. आन्महतः समानाधिकरण - जातीययोः ८०७।
४७. द्व्यष्टनः संख्याया- मबहुव्रीह्यशीत्योः ८०८।

उत्तरपदे प्रकृत्यादेशाः

४८. त्रेस्त्रयः ८०९।
४९. विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ८१०।
५०. हृदयस्य हृल्लेख-यदणलासेषु ९८८।
५१. वा शोक-ष्यञ्-रोगेषु ९८९।
५२. पादस्य पदाज्याति-गोप- हतेषु ९९०।
५३. पद्यत्यतदर्थे ९९१।
५४. हिमकाषिहतिषु च ९९२।
५५. ऋचः शे ९९३।
५६. वा घोषमिश्रशब्देषु ९९४।

५७. उदकस्योदः संज्ञायाम् ९९५ ।
५८. पेषंवास-वाहनधिषु च ९९६ ।
५९. एकहलादौ पूरयितव्ये-ऽन्यतरस्याम् ९९७ ।
६०. मन्थौदन-सक्तु-बिन्दु-वज्र-भार-हार-वीवध-गाहेषु च ९९८ ।
६१. इको ह्रस्वोऽङ्यो गालवस्य ९९९ ।
६२. एकतद्धिते च १००० ।
६३. ङ्यापोः संज्ञाछन्दसोर्बहुलम् १००१ ।
६४. त्वे च १००२ ।
६५. इष्टकेषीका-मालानां चित-तूल-भारिषु १००६ ।
६६. खित्यनव्ययस्य २९४३ ।

उत्तरपदे मुमागमः

६७. अरुर्द्विषदजन्तस्य मुम् २९४२ ।
६८. इच एकाचोऽम्प्रत्ययवच्च २९९४ ।
६९. वाचंयमपुरंदरौ च २९५७ ।
७०. कारे सत्यागदस्य १००७ ।
७१. श्येनतिलस्य पाते ञे १२६८ ।
७२. रात्रेः कृति विभाषा १००८ ।

उत्तरपदे नञादेशाः

७३. नलोपो नञः ७५७ ।
७४. तस्मान्नुडचि ७५८ ।
७५. नभ्राण्नपान्नवेदा-नासत्या-नमुचि-नकुल-नख-नपुंसक-नक्षत्र-नक्र-नाकेषु प्रकृत्या ७५९ ।
७६. एकादिश्चैकस्य चादुक् ८११ ।
७७. नगोऽप्राणिष्वन्यतरस्याम् ७६० ।

उत्तरपदे सहस्यादेशाः

७८. सहस्य सः संज्ञायाम् १००९ ।
७९. ग्रन्थान्ताधिके च १०१० ।
८०. द्वितीये चानुपाख्ये १०११ ।
८१. अव्ययीभावे चाकाले ६६० ।
८२. वोपसर्जनस्य ८४९ ।
८३. प्रकृत्याशिषि ८५० ।

उत्तरपदे समानस्यादेशाः

८४. समानस्यच्छन्दस्यमूर्ध-प्रभृत्युदर्केषु १०१२ ।
८५. ज्योतिर्जनपद-रात्रि-नाभि-नाम-गोत्र-रूप-स्थान-वर्ण-वयो-वचन-बन्धुषु १०१३ ।
८६. चरणे ब्रह्मचारिणि १०१४ ।
८७. तीर्थे ये १०१५ ।
८८. विभाषोदरे १०१६ ।

दृग्दृशवतुषु प्रकृत्यादेशाः

८९. दृग्दृशवतुषु १०१७ ।
९०. इदंकिमोरीश्की १०१८ ।
९१. आ सर्वनाम्नः ४३० ।

अञ्चतौ वप्रत्यये प्रकृत्यादेशाः

९२. विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ४१८ ।
९३. समः समि ४२१ ।
९४. तिरसस्तिर्यलोपे ४२३ ।

सहस्यादेशाः

९५. सहस्य सध्रिः ४२२ ।
९६. सध मादस्थयोश्छन्दसि ३५२९ ।

अप आदेशाः

९७. द्व्यन्तरुपसर्गेभ्योऽप ईत् ९४१ ।
९८. ऊदनोर्देशे ९४२ ।

अन्यशब्दस्यादेशाः

९९. अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशी-राशास्थास्थितो-त्सुकोति-कारकरागच्छेषु १०२५ ।

१००. अर्थे विभाषा १०२६ ।

कुशब्दस्यादेशाः

१०१. कोः कत्तत्पुरुषेऽचि १०२७ ।

१०२. रथवदयोश्च १०२८ ।

१०३. तृणे च जातौ १०२९ ।

१०४. का पथ्यक्षयोः १०३० ।

१०५. ईषदर्थे १०३१ ।

१०६. विभाषा पुरुषे १०३२ ।

१०७. कवं चोष्णे १०३३ ।

१०८. पथि च च्छन्दसि ३५५० ।

निपातनानि

१०९. पृषोदरादीनि यथोपदिष्टम् १०३४

अह्नशब्दस्यादेशाः

११०. संख्याविसायपूर्वस्याह्नस्या-हन्नन्यतरस्यां ङौ २३८ ।

'उत्तरपदे दीर्घः' ६.३.१३९ यावत्

'दीर्घः' ६.४.१८ इति यावत्

१११. ढ्रलोपे पूर्वस्य दीर्घोऽणः १७४ ।

११२. सहिवहोरोदवर्णस्य २३५७ ।

११३. साढ्यै साढ्वा साढेति-निगमे ३५३१ ।

द्वितीयः संहिताधिकारः

११४. संहितायाम् १०३५ ।

'संहितायाम्' इत्यधिकार आ--पादान्तम् । यदित ऊर्ध्वमनुक्रमिष्यते संहितायामित्येवं तद्वेदितव्यम् ।

११५. कर्णे लक्षणस्याविष्टाष्ट-पञ्च-मणि-भिन्नच्छिन्नच्छिद्र-स्रुव-स्वस्तिकस्य १०३६ ।

११६. नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ १०३७ ।

११७. वनगिर्योः संज्ञायां कोटर-किंशुलकादीनाम् १०३८ ।

११८. वले १०४० ।

११९. मतौ बह्वचोऽ-नजिरादीनाम् १०४१ ।

१२०. शरादीनां च १०४२ ।

१२१. इको वहेऽपीलोः १०४३ ।

१२२. उपसर्गस्य घञ्यमनुष्ये - बहुलम् १०४४ ।

१२३. इकः काशे १०४५ ।

१२४. दस्ति ३०७९ ।

१२५. अष्टनः संज्ञायाम् १०४६ ।

१२६. छन्दसि च ३५३२ ।

१२७. चितेः कपि १०४७ ।

१२८. विश्वस्य वसुराटोः ३७९ ।

१२९. नरे संज्ञायाम् १०४८ ।

१३०. मित्रे चर्षौ १०४९ ।

१३१. मन्त्रे सोमाश्वेन्द्रिय-विश्व - देव्यस्य मतौ ३५३३ ।

१३२. ओषधेश्च विभक्ता-वप्रथमायाम् ३५३४ ।

१३३. ऋचि तु-नु-घ-मक्षु-तङ्-कुत्रोरुष्याणाम् ३५३५ ।

१३४. इकः सुञि ३५३६।
१३५. द्व्यचोऽतस्तिङः ३५३७।
१३६. निपातस्य च ३५३८।
१३७. अन्येषामपि दृश्यते ३५३९।
१३८. चौ ४१७।
१३९. संप्रसारणस्य १००४।

## षष्ठाध्याये चतुर्थः पादः

### अङ्गाधिकारः

१. अङ्गस्य २००।

अधिकारोऽयमासप्तमाध्यायपरिसमाप्तेः, ७.४.९७ इति यावत्। यदित ऊर्ध्वमनुक्रमिष्यते--ऽङ्गस्येत्येवं तद्वेदितव्यम्।

### अङ्गस्य दीर्घः

२. हलः २५५९।

### स्वादिषु विभक्तिषु दीर्घः

३. नामि २०९।
४. न तिसृचतसृ ३००।
५. छन्दस्युभयथा ३५४०।
६. नृ च २८३।
७. नोपधायाः ३७०।
८. सर्वनामस्थाने चासंबुद्धौ २५०।
९. वा षपूर्वस्य निगमे ३५४१।
१०. सान्तमहतः संयोगस्य ३१७।
११. अप्तृन्तृच्स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तॄणाम् २७७।
१२. इन्हन्पूषार्यम्णां शौ ३५६।
१३. सौ च ३५७।
१४. अत्वसन्तस्य चाधातोः ४२५।

### झलादौ क्ङिति दीर्घः

१५. अनुनासिकस्य क्विझलोः क्ङिति २६६६।
१६. अज्झनगमां सनि २६१४।
१७. तनोतेर्विभाषा २६२२।
१८. क्रमश्च क्त्वि ३२९।

### अङ्गस्य शूठ्

१९. च्छ्वोः शूडनुनासिके च २५६१।
२०. ज्वरत्वरस्रिव्यविमवामुपधायाश्च २६५४।
२१. राल्लोपः २६५५।

### असिद्धवदधिकारः

२२. असिद्धवदत्राभात् २१८३।

असिद्धवदित्यधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्यते, आ षष्ठाध्यायपरिसमाप्तेः, असिद्धवत् तद्वेदितव्यम्। आभादिति विषयनिर्देशः। तस्मिन् समानाश्रये आभीये कर्तव्ये समानाश्रयमाभीयमसिद्धं भवति। व्याश्रयं तु न भवति। अस्याधिकारस्य विषयाः क्रमेण निर्दिश्यन्ते ---

### १. नलोपः

२३. श्नान्नलोपः २५४४।
२४. अनिदितां हल उपधायाः क्ङिति ४१५।
२५. दंशसञ्जस्वञ्जां शपि २३९६।
२६. रञ्जेश्च २३९७।
२७. घञि च भावकरणयोः ३१८७।
२८. स्यदो जवे ३१८८।
२९. अवोदैधौद्म-प्रश्रथ-हिमश्रथाः ३१८९।

३०. नाञ्चेः पूजायाम् ४२४।
३१. क्त्वि स्कन्दिस्यन्दोः ३३२१।
३२. जान्तनशां विभाषा ३३३०।
३३. भञ्जेश्च चिणि २७६४।

२. शास उपधाया इकारादेशः

३४. शास इदङ्हलोः २४८६।

३. शासः शा

३५. शा हौ २४८७।

४. हन्तेर्जः

३६. हन्तेर्जः २४३१।

५. अनुनासिकलोपः

३७. अनुदात्तोपदेश-वनति-तनोत्यादीना-मनुनासिकलोपो झलि क्ङिति २४२८।
३८. वा ल्यपि ३३३४।
३९. न क्तिचि दीर्घश्च ३३१४।
४०. गमः क्वौ २९८६।

६. अनुनासिकस्यात्त्वम्

४१. विड्वनोरनुनासिकस्यात् २९८२।
४२. जनसनखनां सञ्झलोः २५०४।
४३. ये विभाषा २३१९।
४४. तनोतेर्यकि २७५९।
४५. सनःक्तिचि लोपश्चास्या-न्यतरस्याम् ३३१५।

आर्धधातुक इत्यधिकारः

४६. आर्धधातुके २३०७।

आर्धधातुके इत्यधिकारोऽयं 'न ल्यपि ६.४.७०' इत्यन्तम्। प्रागेतस्माद्यदित ऊर्ध्व-मनुक्रमिष्यते, 'आर्धधातुके' इत्येवं तद् वेदितव्यम्।

७. भ्रस्जो रमागमः

४७. भ्रस्जो रोपधयो रमन्यतरस्याम् २५३५।

८. अतो लोपः

४८. अतो लोपः २३०८।

९. यलोपः

४९. यस्य हलः २६३१।
५०. क्यस्य विभाषा २६६०।

१०. णेर्लोपः

५१. णेरनिटि २३१३।
५२. निष्ठायां सेटि ३०५७।
५३. जनिता मन्त्रे ३५४२।
५४. शमिता यज्ञे ३५४३।

११. णेरयादेशः

५५. अयामन्ताल्वाय्येत्न्विष्णुषु २३११।
५६. ल्यपि लघुपूर्वात् ३३३६।
५७. विभाषाऽऽपः ३३३७।

१२. दीर्घः-ल्यपि, निष्ठायाम्

५८. युप्लुवोर्दीर्घश्छन्दसि ३५४४।
५९. क्षियः ३३३८।
६०. निष्ठायामण्यदर्थे ३०१४।

६१. वाऽऽक्रोशदैन्ययोः

१३. चिण्वद्भावः

६२. स्यसिच्सीयुट्-तासिषु भावकर्म-णोरुपदेशे-ऽज्झन-ग्रह-दृशां वा-चिण्वदिट् च २७५७।

क्ङित्यार्धधातुके परतः कार्याणि

१४. दीङो युडागमः

६३. दीङो युडचि क्ङिति २५०७।

१५. लोपः-आकारस्य

६४. आतो लोप इटि च २३७२।

१६. ईत्त्वम्-आकारास्य

६५. ईद्यति २८४३।

ईत्त्वम्-घुमास्थादीनाम्

६६. घु-मास्था-गापा-जहातिसां हलि २४६२।

१७. एत्वम्-घुमास्थादीनाम्

६७. एर्लिङि २३७४।

६८. वान्यस्य संयोगादेः २३७८।

६९. न ल्यपि ३३३५।

१८. मयतेरित्वम्

७०. मयतेरिदन्यतरस्याम् ३३१८।

इत्यार्धधातुकाधिकारः

१९. अङ्गस्याडाटावागमौ

७१. लुङ्लङ्लृङ्क्ष्वडुदात्तः २२०६।

७२. आडजादीनाम् २२५४।

७३. छन्दस्यपि दृश्यते ३५४५।

७४. न माङ्योगे २२२८।

७५. बहुलं छन्दस्यमाङ्योगेऽपि ३५४६।

२०. इर् इत्येतस्य रे इत्ययमादेशः

७६. इरयो रे ३५४७।

२१. अङ्गस्येयङुवङौ

७७. अचिश्नु-धातुभ्रुवां य्वो--रियङुवङौ २७१।

७८. अभ्यासस्यासवर्णे २२९०।

७९. स्त्रियाः ३०१।

८०. वाम्शसोः ३०२।

२२. यण्

८१. इणो यण् २४५५।

८२. एरनेकाचोऽसंयोगपूर्वस्य २७२।

८३. ओः सुपि २८१।

८४. वर्षाभ्वश्च २८२।

८५. न भूसुधियोः २७३।

८६. छन्दस्युभयथा ३५४८।

८७. हुश्नुवोः सार्वधातुके २३८७।

२३. भुवो वुगागमः

८८. भुवो वुग्लुङ्लिटोः २१७४।

२४. उपधाया ऊत्त्वम्

८९. ऊदुपधाया गोहः २३६४।

९०. दोषो णौ २६०४।

९१. वा चित्तविरागे २६०५।

२५. उपधाया ह्रस्वो, दीर्घश्च

९२. मितां ह्रस्वः २५६८।

९३. चिण्णमुलोर्दीर्घोऽन्यतरस्याम् २७६२।

९४. खचि ह्रस्वः २९५५।

९५. ह्लादो निष्ठायाम् ३०७३।

९६. छादेर्घेऽद्व्युपसर्गस्य ३२९७।

९७. इस्मन्त्रन्क्विषु च २९८५।

२६. उपधाया लोपः

९८. गमहनजनखनघसां लोपः -क्ङित्यनङि २३६३।

९९. तनिपत्योश्छन्दसि ३५४९।

६.४.१०१ इत्यत आरभ्य ६.४.११९ इति यावद् विधयः क्ङित्सार्वधातुकसम्बन्धीनि सन्ति।

१००. घसिभसोर्हलि च ३५५०।

२७. हेर्धिः

१०१. हुझल्भ्यो हेर्धिः २४२५।

१०२. श्रुशृणुपॄकृवृभ्यश्छन्दसि ३५५१।

१०३. अङितश्च ३५५३।

२८. चिण उत्तरस्य लुक्

१०४. चिणो लुक् २३२९।

२९. हि-लुक्

१०५. अतो हेः २२०२।

३०. प्रत्ययस्योकारलोपः

१०६. उतश्च प्रत्ययादसंयोगपूर्वात् २३३४।

१०७. लोपश्चास्यान्यतरस्यां म्वोः २३३३।

१०८. नित्यं करोतेः २५४८।

१०९. ये च २५४९।

३१. करोतेरत उत्

११०. अत उत्सार्वधातुके २४६७।

३२. अकारलोपः श्नसोः

१११. श्नसोरल्लोपः २४६९।

३३. आकारलोपः श्नाभ्यस्तयोः

११२. श्नाभ्यस्तयोरातः २४८३।

३४. ईत्वं श्नाभ्यस्तयोः

११३. ई हल्यघोः २४९७।

३५. दरिद्रस्य-इत्वम्

११४. इद्दरिद्रस्य २४८२।

३६. भिय इत्वम्

११५. भियोऽन्यतरस्याम् २४९२।

३७. जहातेरित्वम्

११६. जहातेश्च २४९८।

३८. जहातेरात्वम्

११७. आ च हौ २४९९।

३९. जहातेर्लोपः

११८. लोपो यि २५००।

४०. घ्वसोरेत्वाभ्यासलोपौ

११९. घ्वसोरेद्धा-वभ्यासलोपश्च २४७१।

४१. लिटि एत्वाभ्यासलोपप्रकरणम्

१२०. अत एकहल्मध्येऽनादेशादेर्लिटि २२६०।

१२१. थलि च सेटि २२६१।

१२२. तॄफलभजत्रपश्च २३०१।

१२३. राधो हिंसायाम् २५३२।

१२४. वा जॄभ्रमुत्रसाम् २३५६।

१२५. फणां च सप्तानाम् २३५४।

१२६. न शस-दद-वादि-गुणानाम् २२६३।

४२. तृ-आदेशः

१२७. अर्वणस्त्रसावनञः ३६४।

१२८. मघवा बहुलम् ३६०।

भाधिकारः

१२९. भस्य २३३।

भस्येत्ययमधिकार आऽध्यायपरि--समाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यते, भस्येत्येवं तद्वेदितव्यम्।

४३. पादः पदादेशः

१३०. पादः पत् ४१४।

४४. भस्याङ्गस्य सम्प्रसारणम्

१३१. वसोः संप्रसारणम् ४३५।

१३२. वाह ऊठ् ३२९।

१३३. श्वयुवमघोनामतद्धिते ३०२।

४५. भस्याङ्गस्य लोपः

१३४. अल्लोपोऽनः २३४।

१३५. षपूर्वहन्धृतराज्ञामणि ११६०।

१३६. विभाषा ङिश्योः २३७।
१३७. न संयोगाद्वमन्तात् ३५५।
१३८. अचः ४१६।
१३९. उद ईत् ४२०।
१४०. आतो धातोः २४०।
१४१. मन्त्रेष्वाङ्यादेरात्मनः ३५५४।
१४२. ति विंशतेर्डिति ८४४।

४६. भस्याङ्गस्य टेर्लोपः

१४३. टेः ३१६।
१४४. नस्तद्धिते ६७९।
१४५. अह्नष्टखोरेव ७८९।

४७. उकारान्तस्य भस्य गुणः

१४६. ओर्गुणः ८४७।

४८. उकारान्तस्य भस्य लोपः

१४७. ढे लोपोऽकद्र्वाः ११४२।

४९. इवर्णावर्णान्तस्य भस्य लोपः

१४८. यस्येति च ३११।

५०. भस्याङ्गस्य यलोपः

१४९. सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ४९९।
१५०. हलस्तद्धितस्य ४७२।
१५१. आपत्यस्य च तद्धितेऽनाति १०८२।
१५२. क्यच्व्योश्च २११९।

५१. भस्य छस्य लुक्

१५३. बिल्वादिभ्यश्छस्य लुक् १३११।

५२. इष्ठेमेयःसु प्रत्ययेषु भस्यादेशाः

१५४. तुरिष्ठेमेयःसु २००८।
१५५. टेः १७८६।
१५६. स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्राणां यणादिपरं पूर्वस्य च गुणः २०१५।
१५७ प्रिय-स्थिर-स्फिरोरु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां-प्रस्थ-स्फ-वर्बंहि-गर्वषि-त्रब्द्राघि-वृन्दाः २०१६।
१५८. बहोर्लोपो भू च बहोः २०१७।
१५९. इष्ठस्य यिट् च २०१८।
१६०. ज्यादादीयसः २०१२।
१६१. र ऋतो हलादेर्लघोः १७८५।
१६२. विभाषर्जोश्छन्दसि ३५५५।

५३. अङ्गस्य प्रकृतिभावः

१६३. प्रकृत्यैकाच् २०१०।
१६४. इनण्यनपत्ये १२४५।
१६५. गाथि-विदथि-केशि-गणि-पणिनश्च १२७५।
१६६. संयोगादिश्च ११५६।
१६७. अन् ११५५।
१६८. ये चाभावकर्मणोः ११५४।
१६९. आत्माध्वानौ खे १६७१।
१७०. न मपूर्वोऽपत्येऽवर्मणः ११५७।

५४. निपातनानि

१७१. ब्राह्मोऽजातौ ११५८।
१७२. कार्मस्ताच्छील्ये १६१३।
१७३. औक्ष-मनपत्ये ११५९।
१७४. 'दाण्डिनायनहास्तिनाय-नाथर्वणिक-जैह्माशिनेय-वाशिनायनि-भ्रौणहत्य-धैवत्य-सारवैक्ष्वाक-मैत्रेय-हिरण्मयानि ११४५।

१७५. ऋत्व्य-वास्त्व्य-वास्त्व-माध्वी-हिरण्ययानि च्छन्दसि ३५५६।

## सप्तमाध्याये प्रथमः पादः

प्रत्ययादेशाः

१. युवोरनाकौ १२४७।
२. आयनेयीनीयियः फढखछघां - प्रत्ययादीनाम् ४७५।
३. झोऽन्तः २१६९।
४. अदभ्यस्तात् २४७९।
५. आत्मनेपदेष्वनतः २२५८।
६. शीङो रुट् २४४२।
७. वेत्तेर्विभाषा २७०१।
८. बहुलं छन्दसि ३५५७।
९. अतो भिस ऐस् २०३
१०. बहुलं छन्दसि ३५५८।
११. नेदमदसोरकोः ३४९।
१२. टा-ङसि-ङसामिनात्स्याः २०१।
१३. ङेर्यः २०४।
१४. सर्वनाम्नः स्मै २१५।
१५. ङसिङ्योः स्मात्स्मिनौ २१६।
१६. पूर्वादिभ्यो नवभ्यो वा २२१।
१७. जसः शी २१४।
१८. औङ आपः २८७।
१९. नपुंसकाच्च ३१०।
२०. जश्शसोः शिः ३१२।
२१. अष्टाभ्य औश् ३७२।
२२. षड्भ्यो लुक् २६१।
२३. स्वमोर्नपुंसकात् ३१९।
२४. अतोऽम् ३०९।
२५. अद्ड्-डतरादिभ्यः पञ्चभ्यः ३१५।
२६. नेतराच्छन्दसि ३५५९।
२७. युष्मदस्मद्भ्यां ङसोऽश् ३९९।
२८. ङेप्रथमयोरम् ३८२।
२९. शसो न ३९१।
३०. भ्यसो भ्यम् ३९५।
३१. पञ्चम्या अत् ३९७।
३२. एकवचनस्य च ३९६।
३३. साम आकम् ४००।
३४. आत औ णलः २३७१।
३५. तुह्योस्तातङ्-ङाशिष्यन्यतरस्याम् २१९७।
३६. विदेः शतुर्वसुः ३१०५।
३७. समासेऽनञ्पूर्वे क्त्वो ल्यप् ३३३२।
३८. क्त्वापिच्छन्दसि ३५६०।
३९. सुपां सुलुक्पूर्वसवर्णा-च्छेयाडाड्यायाजालः ३५६१।
४०. अमो मश् ३५६२।
४१. लोपस्त आत्मनेपदेषु ३५६३।
४२. ध्वमो ध्वात् ३५६४।
४३. यजध्वैनमिति च ३५६५।
४४. तस्य तात् ३५६६।
४५. तप्-तनप्-तन-थनाश्च ३५६७।
४६. इदन्तो मसिः ३५६८।
४७. क्त्वो यक् ३५६९
४८. इष्ट्वीनमिति च ३५७०।
४९. स्नात्व्यादयश्च ३५७१।

७.१.५० इत्यत आरभ्य ७.१.९९ इति यावत् स्वादिषु विभक्तिषु परतः कार्याणि सन्ति, ५१, ५८-६९ सूत्राणि वर्जयित्वा।

असुगागमः

५०. आज्जसेरसुक् ३५७२।

५१. अश्वक्षीर-वृष-लवणाना-मात्मप्रीतौ क्यचि २६६२।

सुडागमः

५२. आमि सर्वनाम्नः सुट् २१७।

त्रेस्त्रयादेशः

५३. त्रेस्त्रयः २६४।

नुडागमः

५४. ह्रस्वनद्यापो नुट् २०८।

५५. षट्चतुर्भ्यश्च ३३८।

५६. श्रीग्रामण्योश्छन्दसि ३५७३।

५७. गोः पादान्ते ३५७४।

नुमागमः

५८. इदितो नुम् धातोः २२६२।

५९. शे मुचादीनाम् २५४२।

६०. मस्जिनशोर्झलि २५१७।

६१. रधिजभोरचि २३०२।

६२. नेट्यलिटि रधेः २५१६।

६३. रभेरशब्लिटोः २५८१।

६४. लभेश्च २५८२।

६५. आङो यि २८४५।

६६. उपात्प्रशंसायाम् २८४६।

६७. उपसर्गात्खल्घञोः ३३०६।

६८. न सुदुर्भ्यां केवलाभ्याम् ३३०७।

६९. विभाषा चिण्णमुलोः २७६५

७०. उगिदचां सर्वनामस्थानेऽधातोः ३६१।

७१. युजेरसमासे ३७६।

७२. नपुंसकस्य झलचः ३१४।

७३. इकोऽचि विभक्तौ ३२०

७४. तृतीयादिषु भाषितपुंस्कं - पुंवद् गालवस्य ३२१।

७५. अस्थि-दधि-सक्थ्यक्ष्णा-मनङुदात्तः ३२२।

७६. छन्दस्यपि दृश्यते ३५७५।

७७. ई च द्विवचने ३५७६।

७८. नाभ्यस्ताच्छतुः ४२७।

७९. वा नपुंसकस्य ४४४।

८०. आच्छीनद्योर्नुम् ४४५।

८१. शप्श्यनोर्नित्यम् ४४६।

८२. सावनडुहः ३३२।

८३. दृक्स्ववस्स्वत-वसां छन्दसि ३५७७।

दिव औत्त्वम्

८४. दिव औत् ३३६।

आत्त्वं पथिमथ्यृभुक्षाम्

८५. पथिमथ्यृभुक्षामात् ३६५।

सर्वनामस्थाने परतः कार्याणि

८६. इतोऽत्सर्वनामस्थाने ३६६।

८७. थो न्थः ३६७।

८८. भस्य टेर्लोपः ३६८।

८९. पुंसोऽसुङ् ४३६।

९०. गोतो णित् २८४।

९१. णलुत्तमो वा २२८३।

९२. सख्युरसम्बुद्धौ २५३।

९३. अनङ् सौ २४८।

९४. ऋदुशनस्पुरुदंसोऽनेहसां च २७६।

९५. तृज्वत्क्रोष्टुः २७४।

९६. स्त्रियां च ३०५।

९७. विभाषा तृतीयादिष्वचि २७८।
९८. चतुरनडुहो-रामुदात्तः ३३१।
९९. अम्संबुद्धौ ३३३।

ऋृकारस्यादेशाः

१००. ऋृत इद्धातोः २३९०।
१०१. उपधायाश्च २५७१।
१०२. उदोष्ठ्यपूर्वस्य २४९४।
१०३. बहुलं छन्दसि ३५७८।

## सप्तमाध्याये द्वितीयः पादः

सिचि वृद्धिः

१. सिचि वृद्धिः परस्मैपदेषु २२९७।
२. अतो ल्रान्तस्य २३३०।
३. वदव्रजहलन्तस्याचः २२६७।
४. नेटि २२६८।
५. ह्म्यन्त-क्षण-श्वस-जागृ-
णिश्व्येदिताम् २२९९।
६. ऊर्णोतेर्विभाषा २४४९।
७. अतो हलादेर्लघोः २२८४।

इडागमप्रकरणम्

अत्र ७.२.८ इत्यत आरभ्य ७.२.३४ इत्यन्तमिडागमनिषेधप्रकरणमस्ति। अस्मिन् ७.२.१० सूत्रं धातूनामिडागमं निषेधति, अन्यानि च प्रत्ययानामिति विवेकः।

अनिट्प्रत्ययाः

८. नेड्वशि कृति २९८१।
९. ति-तु-त्र-त-थ-सि-सु-सर-
कसेषु च ३१६३।

अनिड्धातवः

१०. एकाच उपदेशेऽनुदात्तात् २२४६।

इडागमनिषेधः

११. श्र्युकः किति २३८१।
१२. सनि ग्रहगुहोश्च २६१०।
१३. कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि २२९३।
१४. श्वीदितो निष्ठायाम् ३०३९।
१५. यस्य विभाषा ३०२५।
१६. आदितश्च ३०३६।
१७. विभाषा भावादिकर्मणोः
३०५४।
१८. क्षुब्धस्वान्त-ध्वान्त-लग्न-
म्लिष्ट-विरिब्ध-फाण्ट-बाढानि
मन्थमनस्तमःसक्ता-
विस्पष्टस्वरा-ऩायास-
भृशेषु ३०५८।
१९. धृषिशसी वैयात्ये ३०५९।
२०. दृढः स्थूलबलयोः ३०६०।
२१. प्रभौ परिवृढः ३०६१।
२२. कृच्छ्रगहनयोः कषः ३०६२।
२३. घुषि-रविशब्दने ३०६३।
२४. अर्देः सन्निविभ्यः ३०६४।
२५. अभेश्चाविदूर्ये ३०६५।
२६. णेरध्ययने वृत्तम् ३०६६।
२७. वा दान्त-शान्त-पूर्ण-दस्त -
स्पष्टच्छन्नज्ञप्ताः ३०६८।
२८. रुष्यमत्वर-संघुषास्वनाम् ३०६९।
२९. हृषेर्लोमसु ३०७०।
३०. अपचितश्च ३०७१।
३१. ह्रु ह्वरेश्छन्दसि ३५७९।
३२. अपरिह्वृताश्च ३५८०।
३३. सोमे ह्वरितः ३५८१।

३४. ग्रसित-स्कभित-स्तभितोत्तभित-चत्त-विकस्ता विशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्री-रुज्ज्वलिति-क्षरिति-क्षमिति-वमित्यमितीति च ३५८२।

आर्धधातुकप्रत्ययस्येडागमः

३५. आर्धधातुकस्येड् वलादेः २१८४।

३६. स्नुक्रमोरनात्मनेपदनिमित्ते २३२३।

इटो दीर्घः

३७. ग्रहोऽलिटि दीर्घः २५६२।

३८. वृतो वा २३९१।

३९. न लिङि २५२९।

४०. सिचि च परस्मैपदेषु २३९२।

पुनरार्द्धधातुकप्रत्ययस्येडागमः

४१. इट् सनि वा २६२५।

४२. लिङ्सिचोरात्मनेपदेषु २५२८।

४३. ऋतश्च संयोगादेः २५२६।

वेड्धातवः

४४. स्वरतिसूतिसूयतिधूञूदितो वा २२७९।

४५. रधादिभ्यश्च २५१५।

४६. निरः कुषः २५६०।

क्त्वानिष्ठयोः, सनि, तासि चेडागमः

४७. इण् निष्ठायाम् ३०४५।

४८. तीषसहलुभरुषरिषः २३४०।

४९. सनीवन्तर्ध-भ्रस्ज-दम्भु-श्रि-स्वृ-यूर्णु-भर-ज्ञपि-सनाम् २६१८।

५०. क्लिशः क्त्वानिष्ठयोः ३०४९।

५१. पूङश्च ३०५०।

५२. वसतिक्षुधोरिट् ३०४६।

५३. अञ्चेः पूजायाम् ३०४७।

५४. लुभो विमोहने ३०४८।

५५. जॄ-व्रश्च्योः क्त्वि ३३२७।

५६. उदितो वा ३३२८।

५७. सेऽसिचि कृत-चृतच्छृद-तृद-नृतः २५०६।

५८. गमेरिट् परस्मैपदेषु २४०१।

५९. न वृद्भ्यश्चतुर्भ्यः २३४८।

६०. तासि च क्लृपः २३५२।

थलीडागमः

६१. अचस्तास्वत्थल्यनिटो नित्यम् २२९४।

६२. उपदेशेऽत्वतः २२९५।

६३. ऋतो भारद्वाजस्य २२९६।

६४. बभूथाततन्थ-जगृभ्म-ववर्थेति निगमे २५२७।

६५. विभाषा सृजि-दृशोः २४०४।

६६. इडत्त्यर्त्ति-व्ययतीनाम् २३८४।

क्वसौ-इडागमः

६७. वस्वेकाजाद्घसाम् ३०९६।

६८. विभाषा गम-हन-विद-विशाम् ३०९९।

६९. सनिं-ससनिवांसम् ३५८३।

स्ये, सिचि, सनि इडागमः

७०. ऋद्धनोः स्ये २३६६।

७१. अञ्जेः सिचि २५४६।

७२. स्तुसु-धूञ्भ्यः परस्मैपदेषु २३८५।
७३. यम-रम-नमातां सक्च २३७७।
७४. स्मि-पूङ्-रञ्ज्वशां सनि २६२६।
७५. किरश्च पञ्चभ्यः २६११।

सार्वधातुकप्रत्यये परतः कार्याणि

७६. रुदादिभ्यः सार्वधातुके २४७४।
७७. ईशः से २४३९।
७८. ईडजनोर्ध्वे च २४४०।
७९. लिङः सलोपोऽनन्त्यस्य २२११।
८०. अतो येयः २२१२।
८१. आतो ङितः २२३५।
८२. आने मुक् ३१०१।
८३. ईदासः ३१०४।

विभक्तौ परतः प्रकृत्यादेशाः

७.२.११३ इति यावत्

आकारादेशः

८४. अष्टन आ विभक्तौ ३७१।
८५. रायो हलि २८६।
८६. युष्मदस्मदोरनादेशे ३९३।
८७. द्वितीयायां च ३९०।
८८. प्रथमायाश्च द्विवचने भाषायाम् ३८७।
८९. योऽचि ३९२।

लोपः-विभक्तौ

९०. शेषे लोपः ३८५।

मपर्यन्तस्येत्यधिकारः ७.२.९८

इति यावत्

९१. मपर्यन्तस्य ३८३।

मपर्यन्तस्येत्ययमधिकारः ७.२.९८ इति यावत्। यदित ऊर्ध्वमनुक्रमिष्यते मपर्यन्तस्येत्येवं तद्वेदितव्यम्।

९२. युवावौ द्विवचने ३८६।
९३. यूयवयौ जसि ३८८।
९४. त्वाहौ सौ ३८४।
९५. तुभ्यमह्यौ ङयि ३९४।
९६. तवममौ ङसि ३९८।
९७. त्वमावेकवचने ३८९।
९८. प्रत्ययोत्तरपदयोश्च १३७३।

इति मपर्यन्तस्येत्यधिकारः

पुनर्विभक्तौ परतः प्रकृत्यादेशाः

९९. त्रिचतुरोः स्त्रियां तिसृचतसृ २९८।
१००. अचि र ऋतः २९९।
१०१. जराया जरसन्यतरस्याम् २२७।
१०२. त्यदादीनामः २६५।
१०३. किमः कः ३४२।
१०४. कु तिहोः १९५४।
१०५. क्वाति १९६०।
१०६. तदोः सः सावनन्त्ययोः ३८१।
१०७. अदस औ सुलोपश्च ४३७।
१०८. इदमो मः ३४३।
१०९. दश्च ३४५।
११०. यः सौ ४४१।
१११. इदोऽय् पुंसि ३४४।
११२. अनाप्यकः ३४६।
११३. हलि लोपः ३४७।

वृद्धिप्रकरणम् ७.३.३१ यावत्

११४. मृजेर्वृद्धिः २४७३।
११५. अचो ञ्णिति २५४।

इतो 'ञ्णिति' इत्यनुवर्तति ७.३.३५ इति यावत्।

११६. अत उपधाया: २२८२।

इत: 'तद्धितेषु' 'किति' इति चानुवर्तेते ७.३.३१ इति यावत्।

११७. तद्धितेष्वचामादे: १०७५।

११८. किति च १०७६।

## सप्तमाध्याये तृतीय: पाद:

१. देविका-शिंशपा-दित्यवाड्-दीर्घसत्र-श्रेयसामात् १४३९।

२. केकय-मित्रयु-प्रलयानां यादेरिय: ११४४।

३. न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु - ताभ्यामैच् १०९८।

४. द्वारादीनां च १३८६।

५. न्यग्रोधस्य च केवलस्य १५४३।

६. न कर्मव्यतिहारे ३२१७।

७. स्वागतादीनां च १५४९।

८. श्वादेरिञि १५६०।

९. पदान्तस्यान्यतरस्याम् १५६१।

उत्तरपदस्येत्यधिकार:

१०. उत्तरपदस्य १३६९।

उत्तरपदस्येत्यधिकारो हनस्तो चिण्णलो: ७.३.३२ इत्यत: प्रागिति। प्रागेतस्मात् यदित ऊर्ध्वमनुक्रमिष्यते उत्तरपदस्येत्येवं तद्वेदितव्यम्।

'तद्धितेषु' 'किति' 'वृद्धि:' इति चानुवर्तमाना:

११. अवयवादृतो: १३७९।

१२. सुसर्वार्द्धाज्जनपदस्य १३९८।

१३. दिशोऽमद्राणाम् १३९९।

१४. प्राचां ग्रामनगराणाम् १४००।

१५. संख्याया: संवत्सरसंख्यस्य - च १७५२।

१६. वर्षस्याभविष्यति १७५४।

१७. परिमाणान्तस्या - संज्ञाशाणयो: १६८३।

१८. जे प्रोष्ठपदानाम् १४०९।

इत: पूर्वपदस्य चेत्यनुवर्तनादुभय-पदवृद्धि: ७.३.३१ इति यावत्

१९. हृद्भगसिन्ध्वन्ते - पूर्वपदस्य च ११३३।

२०. अनुशतिकादीनां च १४३८।

२१. देवताद्वन्द्वे च १२३९।

२२. नेन्द्रस्य परस्य १२४०।

२३. दीर्घाच्च वरुणस्य १२४१।

२४. प्राचां नगरान्ते १४३१।

२५. जङ्गलधेनुवलजान्तस्य - विभाषितमुत्तरम् १४३२।

२६. अर्धात्परिमाणस्य पूर्वस्य - तु वा १६८४।

२७. नात: परस्य १६८५।

२८. प्रवाहणस्य ढे ११२९।

२९. तत्प्रत्ययस्य च ११३०।

३०. नञ: शुचीश्वर-क्षेत्रज्ञ-कुशल - निपुणानाम् १४६०।

३१. यथातथयथापुरयो: पर्यायेण - १७८९।

'तद्धितेषु' 'किति' 'उत्तरपदस्य' इति निवृत्तम्।

'ञ्णिति' इति वर्तते ७.३.३५ इति यावत्

३२. हनस्तोऽचिण्णलोः २५७४।
३३. आतो युक्चिण्कृतोः २७६१।
३४. नोदात्तोपदेशस्य - मान्तस्यानाचमेः २७६३।
३५. जनिवध्योश्च २५१२।

णौ परतो विधयः ७.३.४३ इति यावत्

३६. अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुङ्णौ २५७०।
३७. शाच्छासाह्वाव्यावेपां युक् २५८५।
३८. वो विधूनने जुक् २५९०।
३९. लीलोर्नुग्लुका-वन्यतरस्यां - स्नेहविपातने २५९१।
४०. भियो हेतुभये षुक् २५९५।
४१. स्फायो वः २५९७।
४२. शदेरगतौ तः २५९८।
४३. रुहः पोऽन्यतरस्याम् २५९९।

कात्पूर्वस्यात इत्त्वम् ७.३.४९ यावत्

४४. प्रत्ययस्थात् कात्पूर्वस्यात- इदाप्यसुपः ४६३।
४५. न यासयोः ४६४।
४६. उदीचामातः स्थाने - यकपूर्वायाः ४६५।
४७. भस्त्रैषाजा-ज्ञाद्वास्वा - नञ्पूर्वाणामपि ४६६।
४८. अभाषितपुंस्काच्च ४६७।
४९. आदाचार्याणाम् ४६८।

प्रत्ययादेशाः ७.३.५१ यावत्

५०. ठस्येकः ११७०।
५१. इसुसुक्तान्तात्कः १२२१।

चजोः कुत्वम् ७.३.६९ इति यावत्

५२. चजोः कु घिण्ण्यतोः २८६३।
५३. न्यङ्क्वादीनां च २८६४।
५४. हो हन्तेर्ञ्णिन्नेषु ३५८।
५५. अभ्यासाच्च २४३०।
५६. हेरचङि २५३१।
५७. सन्लिटोर्जेः २३३१।
५८. विभाषा चेः २५२५।
५९. न क्वादेः २८७५।
६०. अजिव्रज्योश्च २८७६।
६१. भुजन्युब्जौ - पाण्युपतापयोः २८७७।
६२. प्रयाजानुयाजौ यज्ञाङ्गे २८७८।
६३. वञ्चेर्गतौ २८७९।
६४. ओक उचः के २८८०।
६५. ण्य आवश्यके २८८१।
६६. यजयाचरुचप्रवचर्चश्च २८८२।
६७. वचोऽशब्दसंज्ञायाम् २८८३
६८. प्रयोज्यनियोज्यौ शक्यार्थे २८८४।
६९. भोज्यं भक्ष्ये २८८५।

लोप-लुक्-प्रकरणम्

७०. घोर्लोपो लेटि वा ३५८४।
७१. ओतः श्यनि २५१०।
७२. क्सस्याचि २३३७।
७३. लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये २३६५।

सार्वधातुके परतोऽङ्गकार्याणि ७.३.७४ इत्यत आरभ्य ७.३.१०१ इति

यावत् क्ङिति सार्वधातुकेऽङ्गकार्याणि भवन्ति। (तत्र ८४, ८५, ८६ सूत्राण्यार्धधातुकेऽपि प्रवर्तन्त इति विवेक:)

७४. शमामष्टानां दीर्घ: श्यनि२५१९।

७५. ष्ठिवु-क्लमु-चमां शिति २३२०।

७६. क्रम: परस्मैपदेषु २३२२।

७७. इषु-गमि-यमां छ: २४००।

७८. पा-घ्रा-ध्मा-स्था-म्ना-दाण्दृश्यर्ति-सर्ति-शद-सदां पिब-जिघ्र-धम -तिष्ठ-मन-यच्छ-पश्यर्च्छ धौ-शीय-सीदा: २३६०।

७९. ज्ञाजनोर्जा २५११।

८०. प्वादीनां ह्रस्व: २५५८।

८१. मीनातेर्निगमे ३५८५।

८२. मिदेर्गुण: २३४६।

८३. जुसि च २४८१।

८४. सार्वधातुकार्धधातुकयो: २१६८।

८५. जाग्रोऽविचिण्णल्ङित्सु २४८०।

८६. पुगन्तलघूपधस्य च २१८९।

८७. नाभ्यस्तस्याचि पिति -सार्वधातुके २५०३।

८८. भूसुवोस्तिङि २२२४।

८९. उतो वृद्धिर्लुकि हलि २४४३।

९०. ऊर्णोतेर्विभाषा २४४५।

९१. गुणोऽपृक्ते २४४८।

९२. तृणह इम् २५४५।

९३. ब्रुव ईट् २४५२।

९४. यङो वा २६५१।

९५. तुरु-स्तुशम्यम: -सार्वधातुके २४४४।

९६. अस्तिसिचोऽपृक्ते २२२५।

९७. बहुलं छन्दसि ३५८६।

९८. रुदश्च पञ्चभ्य: २४७५।

९९. अड्गार्ग्यगालवयो: २४७६।

१००. अद: सर्वेषाम् २४२६।

१०१. अतो दीर्घो यञि २१७०।

सुप्यङ्गकार्यम्

१०२. सुपि च २०२।

१०३. बहुवचने झल्येत् २०५।

१०४. ओसि च २०७।

१०५. आङि चाप: २८९।

१०६. संबुद्धौ च २८८।

१०७. अम्बार्थ-नद्योर्ह्रस्व: २६७।

१०८. ह्रस्वस्य गुण: २४२।

१०९. जसि च २४१।

११०. ऋतो ङि-सर्वनामस्थानयो: २७५।

१११. घेर्ङिति २४५।

११२. आण्नद्या: २६८।

११३. याडाप: २९०।

११४. सर्वनाम्न: स्याड्ढ्रस्वश्च २९१।

११५. विभाषा द्वितीया -तृतीयाभ्याम् २९३।

प्रत्ययादेशा:

११६. ङेराम् नद्याम्नीभ्य: २७०।

११७. इदुद्भ्याम् २९७।

११८. औत् २५६।

११९. अच्च घे: २४७।

१२०. आङो नास्त्रियाम् २४४ ।

सप्तमाध्याये चतुर्थः पादः

णौ चङ्यङ्गकार्यम्

१. णौ चङ्युपधाया: ह्रस्वः २३१४ ।
२. नाग्लोपिशास्वृदिताम् २५७२ ।
३. भ्राज-भास-भाष-दीप-जीव-मील-पीडा-मन्यतरस्याम् २५६५ ।
४. लोपः पिबते - रीच्चाभ्यासस्य २५८७ ।
५. तिष्ठतेरित् २५८८ ।
६. जिघ्रतेर्वा २५८९ ।
७. उर्ऋत् २५६७ ।
८. नित्यं छन्दसि ३५८७ ।

लिट्यङ्गकार्याणि

९. दयतेर्दिगि लिटि २३८८ ।
१०. ऋतश्च संयोगादेर्गुणः २३८९ ।
११. ऋच्छत्यॄताम् २३८३ ।
१२. शृदृप्रां ह्रस्वो वा २४९५ ।
१३. केऽणः ८३४ ।
१४. न कपि ८३५ ।

केऽङ्गकार्यम्

१५. आपोऽन्यतरस्याम् ८९२ ।

अङ्यङ्गकार्याणि

१६. ऋदृशोऽङि गुणः २४०६ ।
१७. अस्यतेस्थुक् २५२० ।
१८. श्वयतेरः २४२१ ।
१९. पतः पुम् २३५५ ।
२०. वच उम् २४५४ ।

सार्वधातुके शीङो गुणः

२१. शीङः सार्वधातुके गुणः २४४१ ।

यकारादिषु प्रत्ययेषु च्वौ चाङ्गकार्याणि

२२. अयङ् यि क्ङिति २६४९ ।
२३. उपसर्गाद्ध्रस्व ऊहतेः २७०२ ।
२४. एतेर्लिङि २४५७ ।
२५. अकृत्सार्वधातुकयोर्दीर्घः २२९८ ।
२६. च्वौ च २१२० ।
२७. रीङृतः १२३४ ।
२८. रिङ्शयग्लिङ्क्षु २३६७ ।
२९. गुणोऽर्ति-संयोगाद्योः २३८० ।
३०. यङि च २६३३ ।
३१. ई घ्राध्मोः २६४८ ।
३२. अस्य च्वौ २११८ ।
३३. क्यचि च २६५८ ।
३४. अशनायोदन्य-धनाया-बुभुक्षा - पिपासा-गर्धेषु २६६१ ।
३५. न च्छन्दस्यपुत्रस्य ३५८८ ।
३६. दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ३५८९ ।
३७. अश्वाघस्यात् ३५९० ।
३८. देव-सुम्नयोर्यजुषि काठके ३५९१ ।
३९. कव्यध्वर-पृतनस्यर्चि लोपः ३५९२ ।

तकारादौ कित्यङ्गकार्याणि

४०. द्यतिस्यतिमास्थामित्ति - किति ३०७४ ।
४१. शाच्छोरन्यतरस्याम् ३०७५ ।
४२. दधातेर्हिः ३०७६ ।

४३. जहातेश्च क्त्वि ३३३१।

४४. विभाषा छन्दसि ३५९३।

४५. सुधित-वसुधित-नेमधित-धिष्व-धिषीय च ३५९४।

४६. दो दद् घोः ३०७७।

४७. अच उपसर्गात्तः ३०७८।

अपो भि तकारादेशः

४८. अपो भि ४४२।

सकारान्तस्याङ्गस्यादेशाः

४९. सः स्यार्धधातुके २३४२।

५०. तासस्त्योर्लोपः २१९१।

५१. रि च २१९२।

५२. ह एति २२५०।

दीधीवेव्योर्लोपः

५३. यीवर्णयोर्दीधीवेव्योः २४८८।

सन्यङ्गकार्याणि

५४. सनि मी-मा-घु-रभ-लभ-शक-पत-पदा-मच इस् २६२३।

५५. आप्ज्ञप्यृधामीत् २६१९।

५६. दम्भ इच्च २६२१।

५७. मुचोऽकर्मकस्य गुणो वा २६२४।

अभ्यासकार्यमापादान्तम्

५८. अत्र लोपोऽभ्यासस्य २६२०।

सामान्याभ्यासकार्याणि

५९. ह्रस्वः २१८०।

६०. हलादिः शेषः २१७९।

६१. शर्पूर्वाः खयः २२५९।

६२. कुहोश्चुः २२४५।

६३. न कवतेर्यङि २६४१।

६४. कृषेश्छन्दसि ३५९५।

६५. दाधर्त्ति-दर्धर्त्ति-दर्धर्षि-बोभूतु-तेतिक्तेऽलर्ष्या-पनीफणत्-संसनिष्यदत्-करिक्रत्-कनिक्रदद्-भरिभ्रद्-दविध्वतो-दविद्युतत्-तरित्रतः-सरीसृपतं-वरीवृजन्-मर्मृज्या-गनीगन्तीति च ३५९६।

६६. उरत् २२४४।

६७. द्युतिस्वाप्योः सम्प्रसारणम् २३४४।

लिट्यभ्यासकार्याणि

६८. व्यथो लिटि २३५३।

६९. दीर्घ इणः किति २४५६।

७०. अत आदेः २२४८।

७१. तस्मान्नुड् द्विहलः २२८८।

७२. अश्नोतेश्च २५३३।

७३. भवतेरः २१८१।

७४. ससूवेति निगमे ३५९७।

श्लावभ्यासकार्याणि

७५. निजां त्रयाणां गुणः श्लौ २५०२।

७६. भृञामित् २४९६।

७७. अर्त्तिपिपर्त्योश्च २४९३।

७८. बहुलं छन्दसि ३५९८।

सन्यभ्यासकार्याणि

७९. सन्यतः २३१७।

८०. ओः पुयण्ज्यपरे २५७७।

८१. स्रवति-शृणोति-द्रवति-प्रवति-प्लवति-च्यवतीनां वा २५७८।

यङि-यङ्लुक्यभ्यासकार्याणि

८२. गुणो यङ्लुकोः २६३०।

८३. दीर्घोऽकितः २६३२।
८४. नीग्वञ्चु-स्रंसु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्दाम् २६४२।
८५. नुगतोऽनुनासिकान्तस्य २६४३।
८६. जप-जभ-दह-दश-भञ्ज-पशां च २६३८।
८७. चरफलोश्च २६३६।
८८. उत्परस्यातः २६३७।
८९. ति च ३०३७।
९०. रीगृदुपधस्य च २६४४।
९१. रुग्रिकौ च लुकि २६५२।
९२. ऋतश्च २६५३।

चङ्यभ्यासकार्याणि

९३. सन्वल्लघुनि - चङ्परेऽनग्लोपे २३१६।
९४. दीर्घो लघोः २३१८।
९५. अत्स्मृ-दृ-त्वर-प्रथ-म्रद-स्तॄस्पशाम् २५६६।
९६. विभाषा वेष्टि-चेष्ट्योः २५८३।
९७. ई च गणः २५७३

अष्टमाध्याये प्रथमः पादः

द्विरुक्तप्रकरणम्

१. सर्वस्य द्वे २१३९।
२. तस्य परमाम्रेडितम् ८३।
३. अनुदात्तं च ३६७०।
४. नित्यवीप्सयोः २१४०।
५. परेर्वर्जने २१४१।
६. प्रसमुपोदः पादपूरणे ३५९९।
७. उपर्यध्यधसः सामीप्ये २१४२।
८. वाक्यादे-रामन्त्रितस्यासूया-संमति-कोप-कुत्सन-भर्त्सनेषु २१४३।
९. एकं बहुव्रीहिवत् २१४४।
१०. आबाधे च २१४५।
११. कर्मधारयवदुत्तरेषु २१४६।
१२. प्रकारे गुणवचनस्य २१४७।
१३. अकृच्छ्रे प्रियसुखयो-रन्यतरस्याम् २१४८।
१४. यथास्वे यथायथम् २१४९।
१५. द्वन्द्वं रहस्य-मर्यादा-वचन-व्युत्क्रमण-यज्ञपात्र-प्रयोगाभिव्यक्तिषु २१५०।

'पदस्य' इत्यधिकारः

१६. पदस्य ४०१।

पदस्येत्ययमधिकारः प्राग् अपदान्तस्य मूर्धन्यः ८.३.५५' इति। यदित ऊर्ध्व-मनुक्रमिष्यते पदस्येत्येवं तद्वेदितव्यम्।

'पदात्' इत्यधिकारः

१७. पदात् ४०२।

पदादित्ययमधिकारः प्राग् 'कुत्सने च सुप्यगोत्रादौ ८.१.६९' इति। यदित ऊर्ध्व-मनुक्रमिष्यते पदादित्येवं तद्वेदितव्यम्।

स्वरप्रकरणम्

'अनुदात्तं सर्वमपादादौ' इत्यधिकारः

१८. अनुदात्तं सर्वमपादादौ ४०३।

अनुदात्तमिति च, सर्वमिति च, अपादादाविति च, एतत्त्रयमधिकृतं वेदितव्य-मापादपरिसमाप्तेः। इत उत्तरं यद्वक्ष्यते अनुदात्तं सर्वमपादादावित्येवं तद्वेदितव्यम्।

१९. आमन्त्रितस्य च ३६५४।

२०. युष्मदस्मदोः षष्ठी-चतुर्थी-द्वितीयास्थयोर्वांनावौ ४०४।
२१. बहुवचनस्य वस्नसौ ४०५।
२२. तेमया-वेकवचनस्य ४०६।
२३. त्वामौ द्वितीयायाः ४०७।
२४. न चवा-हाहैव-युक्ते ४०८।
२५. पश्यार्थैश्चानालोचने ४०९।
२६. सपूर्वायाः प्रथमाया - विभाषा ४१०।
२७. तिङो गोत्रादीनि कुत्सना - भीक्ष्ण्ययोः ३९३४।
२८. तिङ्ङतिङः ३९३५।
२९. न लुट् ३५३६।
३०. निपातैर्यद्यदि-हन्त-कुविन्नेच्-चेच्चण्कच्चिद्यत्रयुक्तम् ३५३७।
३१. नह प्रत्यारम्भे ३५३८।
३२. सत्यं प्रश्ने ३५३९।
३३. अङ्गाप्रातिलोम्ये ३९४०।
३४. हि च ३९४१।
३५. छन्दस्यनेकमपि - साकाङ्क्षम् ३९४२।
३६. यावद्यथाभ्याम् ३९४३।
३७. पूजायां नानन्तरम् ३९४४।
३८. उपसर्गव्यपेतं च ३९४५।
३९. तुपश्यपश्यताहैः - पूजायाम् ३९४६।
४०. अहो च ३९४७।
४१. शेषे विभाषा ३९४८।
४२. पुरा च परीप्सायाम् ३९४९।
४३. नन्वित्यनुज्ञैषणायाम् ३९५०।
४४. किं क्रियाप्रश्नेऽनुपसर्ग-मप्रतिषिद्धम् ३९५१।
४५. लोपे विभाषा ३९५२।
४६. एहि मन्ये प्रहासे लृट् ३९५३।
४७. जात्वपूर्वम् ३९५४।
४८. किंवृत्तं च चिदुत्तरम् ३९५५।
४९. आहो उताहो चानन्तरम् ३९५६।
५०. शेषे विभाषा ३९५७।
५१. गत्यर्थलोटा लृण्न चेत्कारकं - सर्वान्यत् ३९५८।
५२. लोट् च ३९५९।
५३. विभाषितं सोपसर्ग-मनुत्तमम् ३९६०।
५४. हन्त च ३९६१।
५५. आम एकान्तरमामन्त्रित-मनन्तिके ३९६२।
५६. यद्धितुपरं छन्दसि ३९६३।
५७. चनचिदिव-गोत्रादि-तद्धिता-म्रेडितेष्वगतेः ३९६४।
५८. चादिषु च ३९६५।
५९. चवायोगे प्रथमा ३९६६।
६०. हेति क्षियायाम् ३९६७।
६१. अहेति विनियोगे च ३९६८।
६२. चाहलोप - एवेत्यवधारणम् ३९६९।
६३. चादिलोपे विभाषा ३९७०।
६४. वैवावेति चच्छन्दसि ३९७१।
६५. एकान्याभ्यां - समर्थाभ्याम् ३९७२।
६६. यद्वृत्तान्नित्यम् ३९७३।

६७. पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ३९७४।
६८. सगतिरपि तिङ् ३९७५।
६९. कुत्सने च सुप्यगोत्रादौ ३९७६।
७०. गतिर्गतौ ३९७७।
७१. तिङि चोदात्तवति ३९७८।

अविद्यमानवत्

७२. आमन्त्रितं पूर्वमविद्यमानवत् ४१२।
७३. नामन्त्रिते समानाधिकरणे - सामान्यवचनम् ४१३।
७४. विभाषितं विशेषवचने - बहुवचनम् ३६५५।

अष्टमाध्याये द्वितीयः पादः

पूर्वत्रासिद्धत्वाधिकारः

१. पूर्वत्रासिद्धम् १२।

पूर्वत्रासिद्धमित्यधिकार आऽष्टमा-ध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यते पूर्वत्रासिद्धमित्येवं तद्वेदितव्यम्।

तत्र येयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पादोनोऽध्यायोऽसिद्धो भवति। इत उत्तरं चोत्तरोत्तरो योगः पूर्वत्र पूर्वत्रासिद्धो भवति। असिद्धवद् भवति, सिद्धकार्यं न करोतीत्यर्थः।

२. नलोपः सुप्स्वरसंज्ञातुग्विधिषु - कृति ३५३।
३. न मु ने ४३९।

एकादेशस्वरः

४. उदात्तस्वरितयोर्यणःस्वरितो-ऽनुदात्तस्य ३६५७।
५. एकादेश उदात्तेनोदात्तः ३६५८।
६. स्वरितो वानुदात्ते पदादौ ३६५९।

नलोपः

७. नलोपः प्रातिपदिकान्तस्य २३६।
८. न ङिसम्बुद्ध्योः ३५२।

मतोर्वः

९. मादुपधायाश्च - मतोर्वोऽयवादिभ्यः १८९७।
१०. झयः १८९८।
११. संज्ञायाम् १८९९।
१२. आसन्दीवदष्ठीवच्चक्रीवत् - कक्षीवद्रुमण्वच्चर्मण्वती १९००।
१३. उदन्वानुदधौ च १९०१।
१४. राजन्वान्सौराज्ये १९०२।
१५. छन्दसीरः ३६००।

नुडागमः

१६. अनो नुट् ३६०१।
१७. नाद् घस्य ३६०२।

लत्वम्

१८. कृपो रो लः २३५०।
१९. उपसर्गस्यायतौ २३२६।
२०. ग्रो यङि २६३९।
२१. अचि विभाषा २५४१।
२२. परेश्च घाङ्कयोः ३२६२।

संयोगान्तस्य लोपः

२३. संयोगान्तस्य लोपः ५४।

सकारस्य लोपः

२४. रात्सस्य २८०।
२५. धि च २२४९।
२६. झलो झलि २२८१।
२७. ह्रस्वादङ्गात् २३६९।

२८. इट ईटि २२६६।
२९. स्को: संयोगाद्योरन्ते च ३८०।
झलि पदान्ते कार्याणि ८.२.३८
इति यावत्
कुत्वम्
३०. चो: कु: ३७८।
ढत्वम्
३१. हो ढ: ३२४।
घत्वम्
३२. दादेर्धातोर्घ: ३२५।
३३. वा द्रुहमुहष्णुहष्णिहाम् ३२७।
घत्वम्
३४. नहो ध: ४४०।
थत्वम्
३५. आहस्थ: २४५१।
षत्वम्
३६. व्रश्च-भ्रस्ज-सृज-मृज-
यज-राज-भ्राजच्छशां ष: २९४।
भष्भाव:
३७. एकाचो बशो भष्
झषन्तस्य स्ध्वो: ३२६।
३८. दधस्तथोश्च २५०१।
पदान्तजश्त्वम्
३९. झलां जशोऽन्ते ८४।
तथोर्ध:
४०. झषस्तथोर्धोऽध: २२८०।
षढो: कत्वम्
४१. षढो: क: सि २९५।
निष्ठातकारस्यादेशा:
४२. रदाभ्यां निष्ठातो न: -
पूर्वस्य च द: ३०१६।
४३. संयोगादेरातो धातोर्यण्वत:
३०१७।
४४. ल्वादिभ्य: ३०१८।
४५. ओदितश्च ३०१९।
४६. क्षियो दीर्घात् ३०१५।
४७. श्योऽस्पर्शे ३०२१।
४८. अञ्चोऽनपादाने ३०२४।
४९. दिवोऽविजिगीषायाम् ३०२८।
५०. निर्वाणोऽवाते ३०२९।
५१. शुष: क: ३०३०।
५२. पचो व: ३०३१।
५३. क्षायो म: ३०३२।
५४. प्रस्त्योऽन्यतरस्याम् ३०३४।
५५. अनुपसर्गात् फुल्ल-क्षीब-
कृशोल्लाघा: ३०३५।
५६. नुद-विदोन्द-त्रा-घ्रा-ह्रीभ्योऽन्य
-तरस्याम् ३०३८।
५७. न ध्या-ख्या-पॄ-मूर्च्छि-
मदाम् ३०४०।
५८. वित्तो भोगप्रत्यययो: ३०४१।
५९. भित्तं शकलम् ३०४२।
६०. ऋणमाधमर्ण्ये ३०४३।
६१. नसत्त-निषत्तानुत्त-प्रतूर्त-
सूर्त-गूर्तानिच्छन्दसि ३६०३।
कुत्वम्
६२. क्विन्प्रत्ययस्य कु: ३७७।
६३. नशेर्वा ४३१।
मकारस्य नकारादेश:
६४. मो नो धातो: ३४१।

६५. म्वोश्च २३०९।

पदान्तस्य रुत्वम्

६६. ससजुषो रुः १६२।

६७. अवयाः श्वेतवाः - पुरोडाश्च ३४१६।

६८. अहन् ४४३।

६९. रोऽसुपि १७२।

७०. अम्नरूधरवरित्युभयथा - छन्दसि ३६०४।

७१. भुवश्च महाव्याहृतेः ३६०५।

पदान्तस्य दत्वम्-रुत्वम्

७२. वसु-स्रंसु-ध्वंस्वनडुहां दः ३३४।

७३. तिप्यनस्तेः २४८४।

७४. सिपि धातो रुर्वा २४८५।

७५. दश्च २४८६।

र्वोर्दीर्घः

७६. र्वोरुपधाया दीर्घ इकः ४३३।

७७. हलि च ३५४।

७८. उपधायां च २२६५।

७९. न भकुर्छुराम् १६२९।

अदस आदेशाः

८०. अदसोऽसेर्दादु दो मः ४१९।

८१. एत ईद् बहुवचने ४३८।

वाक्यस्य टेः प्लुत उदात्त इत्यधिकारः

८२. वाक्यस्य टेः प्लुत उदात्तः ९३।

अधिकारोऽयम्। वाक्यस्य टेरिति, प्लुत इति च, उदात्त इति च, एतत्त्रयमप्यधिकृतं वेदितव्यमापादपरिसमाप्तेः।

यदित ऊर्ध्वमनुक्रमिष्यते वाक्यस्य टेः प्लुत उदात्त इत्येवं तद्वेदितव्यम्।

८३. प्रत्यभिवादेऽशूद्रे ९४।

८४. दूराद्धूते च ९५।

८५. हैहेप्रयोगे हैहयोः ९६।

८६. गुरोरनृतो-ऽनन्त्यस्याप्येकैकस्य - प्राचाम् ९७।

८७. ओमभ्यादाने ३६०६।

८८. ये यज्ञकर्मणि ३६०७।

८९. प्रणवष्टेः ३६०८।

९०. याज्यान्तः ३६०९।

९१. ब्रूहि-प्रेष्य-श्रौषड्-वौषडावहानामादेः ३६१०।

९२. अग्नीत्प्रेषणे परस्य च ३६११।

९३. विभाषा पृष्टप्रतिवचने हेः ३६१२।

९४. निगृह्यानुयोगे च ३६१३।

९५. आम्रेडितं भर्त्सने ३६१४

९६. अङ्गयुक्तं तिङाकाङ्क्षम् ३६१५।

९७. विचार्यमाणानाम् ३६१६।

९८. पूर्वं तु भाषायाम् ३६१७।

९९. प्रतिश्रवणे च ३६१८।

१००. अनुदात्तं प्रश्नान्ताभि-पूजितयोः ३६१९।

१०१. चिदिति चोपमार्थे - प्रयुज्यमाने ३६२०।

१०२. उपरिस्विदासीदिति च ३६२१।

१०३. स्वरित-माम्रेडितेऽसूया-सम्मति-कोप-कुत्सनेषु ३६२२।

१०४. क्षियाशीःप्रैषेषु - तिङाकाङ्क्षम् ३६२३।

१०५. अनन्त्यस्यापि - प्रश्नाख्यानयोः ३६२४।

१०६. प्लुतावैच इदुतौ ३६२५ ।

१०७. एचोऽप्रगृह्यस्या-
दूराद्धूते पूर्वस्यार्धस्या-
दुत्तरस्येदुतौ ३६२६ ।

संहिताधिकारः

१०८. तयोर्य्वावचि संहितायाम्
३६२७ ।

संहितायामित्यधिकृतं वेदितव्यमा-
-ध्यायपरिसमाप्तेः । इत उत्तरं यद्वक्ष्यते
संहितायामित्येवं तद्वेदितव्यम् ।

## अष्टमाध्याये तृतीयः पादः

रुत्वप्रकरणम्

१. मतुवसो रु संबुद्धौ -
छन्दसि ३६२८ ।

२. अत्रानुनासिकः पूर्वस्य तु वा १३६ ।

३. आतोऽटि नित्यम् ३६३२ ।

४. अनुनासिकात्परोऽनुस्वारः १३७ ।

५. समः सुटि १३५ ।

६. पुमः खय्यम्परे १३९ ।

७. नश्छव्यप्रशान् १४० ।

८. उभयथर्क्षु ३६३० ।

९. दीर्घादटि समानपादे ३६३१ ।

१०. नॄन्पे १४१ ।

११. स्वतवान्पायौ ३६३३ ।

१२. कानाम्रेडिते १४३ ।

ढलोपः

१३. ढो ढे लोपः २३३५ ।

रलोपः

१४. रो रि १७३

रेफस्य विसर्जनीयादेशः

१५. खरवसानयोर्विसर्जनीयः ७६ ।

१६. रोः सुपि ३३९ ।

रोयदिशः

१७. भोभगोअघोअपूर्वस्य -
योऽशि १६७ ।

वकारस्य, यकारस्यादेशाः

१८. व्योर्लघुप्रयत्नतरः -
शाकटायनस्य १६८ ।

१९. लोपः शाकल्यस्य ६७ ।

२०. ओतो गार्ग्यस्य १६९ ।

२१. उञि च पदे १७० ।

२२. हलि सर्वेषाम् १७१ ।

मकारस्य आदेशाः

२३. मोऽनुस्वारः १२२ ।

२४. नश्चापदान्तस्य झलि १२३ ।

२५. मो राजि समः क्वौ १२६ ।

२६. हे मपरे वा १२७ ।

२७. नपरे नः १२९ ।

कुक्, टुक्, धुट्, तुक्, ङमुट् आगमाः
८.३.२८-३२

२८. ङ्णोः कुक्टुक्शरि १३० ।

२९. डः सि धुट् १३१ ।

३०. नश्च १३२ ।

३१. शि तुक् १३३ ।

३२. ङमो ह्रस्वादचि -
ङमुण्नित्यम् १३४ ।

उञो वः

३३. मय उञो वो वा १०८ ।

विसर्जनीयस्यादेशाः

३४. विसर्जनीयस्य सः १३८ ।

३५. शर्परे विसर्जनीयः १५० ।
३६. वा शरि १५१ ।
३७. कुप्वोः ≍क ≍पौ च १४२ ।
३८. सोऽपदादौ १५२ ।
३९. इणः षः १५३ ।
४०. नमस्पुरसोर्गत्योः १५४ ।
४१. इदुदुपधस्य चाप्रत्ययस्य १५५ ।
४२. तिरसोऽन्यतरस्याम् १५६ ।
४३. द्वित्रिश्चतुरिति -
कृत्वोऽर्थे १५७ ।
४४. इसुसोः सामर्थ्ये १५८ ।
४५. नित्यं समासेऽनुत्तर-
पदस्थस्य १५९ ।
४६. अतः कृकमिकंसकुम्भपात्र -
कुशाकर्णीष्वनव्ययस्य १६० ।
४७. अधःशिरसी पदे १६१ ।
४८. कस्कादिषु च १४४ ।
४९. छन्दसि वाऽप्रा-
म्रेडितयोः ३६३४ ।
५०. कः करत्करति-कृधि-
कृतेष्वनदितेः ३६३५ ।
५१. पञ्चम्याः परावध्यर्थे ३६३६ ।
५२. पातौ च बहुलम् ३६३७ ।
५३. षष्ठ्याः पति-पुत्र-पृष्ठ -
पार-पद-पयस्पोषेषु ३६३८ ।
५४. इडाया वा ३६३९ ।

अपदान्तस्य मूर्धन्यादेशाधिकारः
(षत्वं, ढत्वञ्च)

५५. अपदान्तस्य मूर्धन्यः २१० ।

पदाधिकारो निवृत्तः । अपदान्तस्येति मूर्धन्यस्येति चैतदधिकृतं वेदितव्यमापाद-परिसमाप्तेः ।

सस्य षत्वम्

५६. सहेः साडः सः ३३५ ।

७७, ७८ सूत्रं वर्जयित्वेतः 'सः' इत्यनुवर्तत आपादान्तम् ।

'इण्कोः' इत्यधिकारः

५७. इण्कोः २११ ।

इण्कोरित्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यते इणः कवर्गाच्चेत्येव तद् वेदितव्यमापादान्तम् ।

५८. नुम्विसर्जनीय -
शर्व्यवायेऽपि ४३४ ।
५९. आदेशप्रत्यययोः २१२ ।
६०. शासिवसिघसीनां च २४१० ।
६१. स्तौतिण्योरेव -
षण्यभ्यासात् २६२७ ।
६२. सः स्विदिस्वदि-
सहीनां च २६२८ ।
६३. प्राक्सितादड्व्यवायेऽपि २२७६ ।
६४. स्थादिष्वभ्यासेन -
चाभ्यासस्य २२७७ ।
६५. उपसर्गात्सुनोति-सुवति -
स्यति-स्तौति-स्तोभति-स्था -
सेनय-सेध-सिच-सञ्ज -
स्वञ्जाम् २२७० ।
६६. सदिरप्रतेः २२७१ ।
६७. स्तन्भेः २२७२ ।
६८. अवाच्चालम्बनाविदूर्ययोः
२२७३ ।
६९. वेश्च स्वनो भोजने २२७४ ।

७०. परिनिविभ्य: सेव-सित-सय-सिवु-सह-सुट्-स्तु-स्वञ्जाम् २२७५।

७१. सिवादीनां - वाड्व्यवायेऽपि २३५९।

७२. अनु-विपर्यभि-निभ्य: -स्यन्दते-रप्राणिषु २३४९।

७३. वे: स्कन्देरनिष्ठायाम् २३९८।

७४. परेश्च २३९९।

७५. परिस्कन्द: प्राच्यभरतेषु ३०२६।

७६. स्फुरति-स्फुलत्योर्नि-र्नि-विभ्य: २५३७।

७७. वे: स्कभ्नातेर्नित्यम् २५५६।

धस्य ढत्वम्

७८. इण: षीध्वं-लुङ्लिटां धोऽङ्गात् २२४७।

७९. विभाषेट: २३२५।

सस्य षत्वम्

८०. समासेऽङ्गुले: सङ्ग: १०१९।

८१. भीरो: स्थानम् १०२०।

८२. अग्ने: स्तुत्स्तोमसोमा: ९२४।

८३. ज्योतिरायुष: स्तोम: १०२१।

८४. मातृपितृभ्यां स्वसा ९८४।

८५. मातु:पितुर्भ्यामन्यतरस्याम् ९८३।

८६. अभिनिस: स्तन: - शब्दसंज्ञायाम् ३१९३।

८७. उपसर्ग-प्रादुर्भ्या-मस्तिर्यच्परः २४७२।

८८. सु-वि-नि-र्दुर्भ्य: सुपि-सूति-समा: २४७७।

८९. नि-नदीभ्यां स्नाते: - कौशले ३०८२।

९०. सूत्रं प्रतिष्णातम् ३०८३।

९१. कपिष्ठलो गोत्रे ३०८४।

९२. प्रष्ठोऽग्रगामिनि २९१७।

९३. वृक्षासनयोर्विष्टर: ३२३३।

९४. छन्दोनाम्नि च ३२०६।

९५. गवि-युधिभ्यां स्थिर: ९६७।

९६. विकुशमिपरिभ्य: स्थलम् ३०८५।

९७. अम्बाम्ब-गोभूमि-सव्याप-द्वि-त्रि-कु-शेकु-शङ्क्वङ्गु-मञ्जि-पुञ्जि-परमे-बर्हि-र्दिव्यग्निभ्य: स्थ: २९१८।

९८. सुषामादिषु च १०२२।

९९. एति संज्ञायामगात् १०२३।

१००. नक्षत्राद्वा १०२४।

१०१. ह्रस्वात्तादौ तद्धिते १३२५।

१०२. निसस्तपतावनासेवने २४०३।

१०३. युष्मत्तत्ततक्षु:ष्वन्त:-पादम् ३६४०।

१०४. यजुष्येकेषाम् ३६४१।

१०५. स्तुतस्तोमयोश्छन्दसि ३६४२।

१०६. पूर्वपदात् ३६४३।

१०७. सुञ: ३६४४।

१०८. सनोतेरन: ३६४५।

१०९. सहे: पृतनर्ताभ्यां च ३६४६।

११०. न रपरसृपिसृजिस्पृशि-स्पृहिसवनादीनाम् ३१६८।

## अष्टमाध्याये चतुर्थः पादः

### णत्वप्रकरणम्

३७. पदान्तस्य १९८।

३८. पदव्यवायेऽपि १०५७।

३९. क्षुभ्नादिषु च ७९२।

हल्सन्धिः पादान्तं यावत्

श्चुत्वम्

४०. स्तोः श्चुना श्चुः १११।

ष्टुत्वम्

४१. ष्टुना ष्टुः ११३।

४२. न पदान्ताट्टोरनाम् ११४।

४३. तोः षि ११५।

४४. शात् ११२।

अनुनासिकः

४५. यरोऽनुनासिकेऽनुनासिको वा ११६।

यरो द्वित्वम्

४६. अचो रहाभ्यां द्वे ५९।

४७. अनचि च ४८।

४८. नादिन्याक्रोशे पुत्रस्य ५५।

४९. शरोऽचि ३४०।

५०. त्रिप्रभृतिषु शाकटायनस्य ५६।

५१. सर्वत्र शाकल्यस्य ५७।

५२. दीर्घादाचार्याणाम् ५८।

अपदान्तजश्त्वम्

५३. झलां जश्झशि ५२।

अभ्यासस्य जश्त्वं चर्त्वम्

५४. अभ्यासे चर्च २१८२।

अपदान्तचर्त्वम्

५५. खरि च १२१।

पदान्तचर्त्वम्

५६. वाऽवसाने २०६।

अप्रगृह्यस्यानुनासिकः

५७. अणोऽप्रगृह्यस्यानुनासिकः ११०।

अनुस्वारस्य परसवर्णः

५८. अनुस्वारस्य ययि परसवर्णः १२४।

५९. वा पदान्तस्य १२५।

लत्वम्

६०. तोर्लि ११७।

पूर्वसवर्णः

६१. उदः स्थास्तम्भोः पूर्वस्य ११८।

६२. झयो होऽन्यतरस्याम् ११९।

शश्छत्वम्

६३. शश्छोऽटि १२०।

यमां लोपः

६४. हलो यमां यमि लोपः ६०।

झरो लोपः

६५. झरो झरि सवर्णे ७१।

स्वरितः

६६. उदात्तादनुदात्तस्य स्वरितः ३६६०।

६७. नोदात्तस्वरितोदय-मगार्ग्य-काश्यप-गालवानाम् ३६६१।

विवृताकारस्य संवृताकारः

६८. अ अ ११।



# अथ पाणिन्यष्टाध्यायीसूत्रानुक्रमणी

– आ –

– ऊ –



– ऋ –

– प –



12.6.1943 दिनाङ्के जबलपुरनगरस्य प्रख्यातायुर्वेद- चिकित्सकात् शास्त्राणां पारदृश्वनः प्राणाचार्यसुन्दरलालशुक्लाद् जानकीदेव्यां लब्धजनिः डॉ० पुष्पा दीक्षिता आचार्य विश्वनाथत्रिपाठिभ्यो व्याकरणमधीत्य, मध्यप्रदेशशासनस्याथ च छत्तीसगढ़प्रदेशशासनस्य महाविद्यालयीय-प्राध्यापकपदात् निवृत्ता पाणिनीयाष्टाध्यायीमाश्रित्य प्रक्रियायाः सर्वथा नवीनं किमपि क्रमं प्रोद्घाटितवती, येन सकलाष्टाध्यायी त्रिभिर्मासैरधिगन्तुं शक्यते।

**प्रकाशिता ग्रन्थाः**

1. अष्टाध्यायीसहजबोधः (प्रथमः–सार्वधातुकलकाराः)
2. अष्टाध्यायीसहजबोधः (द्वितीयः–आर्धधातुकलकाराः)
3. अष्टाध्यायीसहजबोधः (तृतीयः–कृदधिकारः)
4. अष्टाध्यायीसहजबोधः (चतुर्थः–तद्धिताधिकारः)
5. आर्धधातुकप्रत्ययानामिडागमव्यवस्था
6. शीघ्रबोधव्याकरणम्
7. पाणिनीयाष्टाध्यायीसूत्रपाठः प्रकरणनिर्देशसमन्वितः
8. अग्निशिखा।

**प्रकाश्यमानग्रन्था**

9. कृदन्तरूपकोशः
10. तिङन्तरूपकोशः
11. प्रक्रियानुसारिपाणिनीयधातुपाठः
12. परिभाषेन्दुशेखरस्य बहुतरपरिभाषाणामन्यथासिद्धिः
13. अष्टाध्यायीसहजबोधस्यावशिष्टाः चत्वारो भागाः
14. नव्यसिद्धान्तकौमुदी।

ISBN : 978-81-907828-1-4

